शिवधर्मग्रन्थमालायाः
षड्विंशति( २६ )तमं पुष्पम्

# शिवाद्वैतपरिभाषा

श्रीमता ब. ब्र. नीलकण्ठशिवाचार्येण विरचिता

सम्पादक
डॉ० चन्द्रशेखरशर्मा (शिवाचार्य) हिरेमठ



प्रकाशक
प्रबन्धक, संस्थान जंगमवाडीमठ
वा रा ण सी

१९८३ ई०

# शिवाद्वैतपरिभाषा

तर्कतीर्थेन पूवल्लीबृहन्मठाध्यक्षेण
श्रीमता ष० ब्र० नीलकण्ठशिवाचार्येण विरचिता

सम्पादकः
काव्य-सर्वदर्शनतीर्थः, वेदान्ताचार्यः, लब्धस्वर्णपदकः
डॉ० चन्द्रशेखरशर्मा ( शिवाचार्यः ) हिरेमठः
अमरेश्वरमठ; गुलेदगुड्ड ( कर्नाटकप्रदेशस्थः )

प्रकाशकः
प्रबन्धकः, जङ्गमवाडीमठस्य
वाराणसी

वि० सं० २०३९ ]    १९८३ ई०    [ श० सं० १९०४

Shivadvaita Paribhasha by Neelakantha Shivacharya, edited by Dr. Chandra shekhar Sharma Hiremath. 1983.



प्रकाशकः
प्रबन्धक, डी० ३५/७७ जङ्गमवाडीमठस्य
वाराणसी।

प्रथमं देवनागरीसंस्करणम्
१००० प्रतयः



मूल्यम्—५रूप्यकाणि

मुद्रकः
आनन्दकानन प्रेस, टेढीनीम
वाराणसी।



श्रीकाशीज्ञानसिंहासनाधीश्वर
श्री १००८ जगद्गुरु विश्वेश्वरशिवाचार्य महास्वामीजी
संस्थान जंगमवाडीमठ, वाराणसी



लि. वे. प. काशीनाथ शास्त्री जी

शिवाद्वैतपरिभाषेयं पण्डितकुलैकपक्षाय, गुरुवर्गसमुद्धरणदक्षाय,
शिवाद्वैतसिद्धान्तानुलक्षाय, शिवभक्तजनोद्दिष्टकल्पवृक्षाय,
नागनूरुबृहन्मठाध्यक्षाय, श्रीकाशीनाथशास्त्रिहर्यक्षाय
सादरं समर्पिता नीलकण्ठशिवाचार्येण

श्री० ज० विश्वाराध्यो विजयतेतराम्
श्रीकाशीजगद्गुरुविश्वाराध्यज्ञानसिंहासनाधीश्वराणां
श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिनां
शुभाशीर्वचनम्

●

आसेतुहिमाचलपर्यन्तं सुप्रसिद्धं हि वीरशैवमतं केन वा न विज्ञायते? कर्नाटक-आन्ध्र-उत्तरप्रदेशेषु क्रमशो रम्भापुरी-उज्जयिनी-श्रीशैल-काशी-केदाराख्येषु प्रसिद्धेषु क्षेत्रेष्वस्य धर्मस्य प्राचीनानि पञ्च महापीठानि अद्यापि महावैभवेन विराजन्ते।

एतत्पीठाधिकारिभिः तत्सम्प्रदायानुवर्तिभिश्च प्राचीनैराचार्यवर्यैर्विरचिताः सिद्धान्तशिखामणि-नीलकण्ठभाष्य-श्रीकरभाष्य-क्रियासाराख्याः प्रामाणिकाः प्राचीना ग्रन्था उपलभ्यन्ते।

एतदतिरिक्तमाधुनिकैरप्याचार्यैर्लिखितानि वीरशैवसिद्धान्तप्रतिपादकानि बहूनि पुस्तकानि सन्ति। तेषु तर्कतीर्थेन श्रीनीलकण्ठशिवाचार्यवर्येण विरचितः शिवाद्वैतपरिभाषाख्यो ग्रन्थो विशिष्टो वर्तते। ग्रन्थोऽयमितः प्राग् नागनूरुबृहन्मठाध्यक्षेण पण्डितेन श्रीमता काशीनाथशास्त्रिणा कन्नडाक्षरैर्मैसूरनगरे प्रकाशित आसीत्।

अधुना अस्मद्विश्वाराध्यगुरुकुलीयच्छात्रो वीरशैवसिद्धान्ताध्ययने कृतबहुपरिश्रमो वीरशैवधर्मग्रन्थस्य सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षात्मकं शोधकार्यं कृत्वा सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्राप्तविद्यावारिधि (Ph. D.) इत्युपाधिको डॉ. चन्द्रशेखरशर्मा हिरेमठो ग्रन्थाधिकारिणा प० वृ० महादेवय्यमहोदयेन अनुमतिं गृहीत्वा ग्रन्थममुं देवनागराक्षरेण लिप्यन्तरं च कृत्वा ग्रन्थोद्धृतानां वेदागमोपनिषद्वाक्यानां स्थलानि परिमृग्याधस्ताद् टिप्पणीरूपेण निर्दिश्य सम्यक् सम्पादितवान्।

ग्रन्थममुमुद्दिश्य सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षाः डॉ० देवस्वरूपमिश्रमहाभागाः, सांख्य-योग-तन्त्रागमविभागाध्यक्षचराः प० व्रजवल्लभद्विवेदमहोदयाश्च पाण्डित्यपूर्णं सम्मतिपत्रं प्रदायास्य माहात्म्यं संवर्धितवन्त इति प्रमोदविषयः।

वयं तु आशास्महे यदेवं सुसंस्कृतोऽयं ग्रन्थो दक्षिणोत्तरभारतीयानां वीरशैवतत्त्वजिज्ञासूनामुपकाराय कल्पिष्यत इति। एतेन जिज्ञासुच्छात्रकुलमपि अत्यन्तमुपकृतं स्यादिति शिवम्।

●

श्रीसाम्बाय नमः

## ग्रन्थकाराणां श्रीमतां नीलकण्ठशिवाचार्याणां निवेदनम् ।

सुविदितमेव सहृदयानां सर्वसिद्धान्तशिरोरत्नायमानोऽयं शिवाद्वैतसिद्धान्तः सर्वश्रुतिसमन्वयसमासादितः प्राचीनतरश्चेति । सिद्धान्तस्यास्य प्रामाण्यान्वेषणे भगवान्निगमागमराशिरेव सदा जागर्तीति किं वक्तव्यमस्य प्रामाण्यविषये । अन्यप्रमाणानुसरणं "करभमनुसरामः कामधेनौ स्थितायाम्" इत्याभाणकोक्त्याऽनुचितमेव स्यात् । अतः स्वतः प्रामाण्यप्रतिष्ठितानां निगमागमानां सारभूत एवायं सिद्धान्त इति विवेचकानां विदुषां विज्ञातविषय एव ।

एवं प्रमाणसिद्धसिद्धान्तग्रन्थमुद्रणे बद्धदृढपरिकरस्य पण्डितमण्डलिमण्डनायमानस्य श्रीमतः काशीनाथशास्त्रिमहोदयस्य प्रीतये भगवतः परशिवस्य प्रेरणया शिवाद्वैतपरिभाषानामको ग्रन्थः 'केवलं सिद्धान्ततत्त्वप्रचारार्थमेव मया विरचित इति दृढं निवेदयामि ।

शिवाद्वैतसिद्धान्तसुधासागरात् समुत्पन्ने सर्वाङ्गसुन्दरे ग्रन्थरत्ने ममाल्पबुद्धिदोषान्मुद्रणदोषाद्वा दृग्गोचरीभवेयुरशुद्धयस्तर्हि परिशीलयन्तो भवन्तः केवलं गुणैकदृष्टयो भवेयुरिति मनसा निवेदयामि । सम्प्रार्थये च सर्वान्तर्यामिणं भगवन्तं परशिवं पुनरेतादृशसद्ग्रन्थनिर्माणसामर्थ्यंसफलीकरणायेति शिवम् ।

सुधीजनविधेयः
नीलकण्ठशिवाचार्यः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वतां निखिलशास्त्रवेत्तॄणां डॉ० देवस्वरूपमिश्रमहोदयानां शुभाशंसनम् ।

तत्र "वेदान्तविज्ञानसुनिश्चितार्थाः", "अध्यात्मविद्या विद्यानाम्", "इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिः", "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादिश्रुतिस्मृतिब्रह्मसूत्रादिपर्यालोचनेन परमात्मज्ञानमेव निखिलानर्थशमनमिति ध्रुवम् । तच्च विना साधनं न स्यात् । साधननिष्पत्तिप्रवृत्तिश्च फलप्रतिपत्तिप्रयोज्येति मत्वा समन्वयविरोधपरिहारसाधनफलनिरूपणाय प्रवृत्ताः शास्त्रकर्तारः । सत्यपि साधनबाहुल्ये प्रतिबन्धके सति न कार्यसिद्धिरिति हेतोः प्रतिबन्धकाभावस्य कारणत्वं प्रब्रुवते शास्त्रविचक्षणाः । निष्कम्पप्रवृत्तिप्रयोजकज्ञानप्रतिबन्धका अप्रतिपत्तिरतिप्रतिपत्तिश्च । अत एव ग्रन्थनिर्माणे प्रवर्तन्ते निःस्पृहा वीतरागाः संन्यासिनोऽपि । अत एव भगवत्पादैः श्रीशङ्कराचार्यैर्ब्रह्मसूत्रभाष्ये—"तत्राविचार्य यत्किञ्चित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येतानर्थं चेयात्" इति "अथातो ब्रह्मजिज्ञासा" इति सूत्रव्याख्यानान्ते निर्दिष्टम् ।

तच्च वेदान्तशास्त्रं तत्तन्मनीषिमूर्धन्यैः स्वस्वानुभवानुसारिमार्गनिरूपणप्रसङ्गेन बहुधा विभाजितम् । वस्तुतस्तु वेदान्तशब्देन परमात्मविद्यैव गृह्यते । तज्जनकत्वाद् उपनिषद्ग्रन्थोऽपि वेदान्तः । यथा अद्वैतसिद्धिप्रभृतिग्रन्थः । तथा च परमात्मनिरूपणपरकोपनिषत्परमतात्पर्यविभासकव्याख्यानपरा बहवो ग्रन्था वेदान्तपदेन व्यवहृताः । अत एव ब्रह्मसूत्रं गीता तद्भाष्यतट्टीका अपि वेदान्तशब्देन समादृता अधीयन्ते अध्याप्यन्ते च ।

तथा च एकमेव वेदान्तशास्त्रं व्याख्यातृभेदाद् अद्वैतविशिष्टाद्वैतशुद्धाद्वैतभेदाचिन्त्यभेदाभेदशक्तिविशिष्टाद्वैतादिशब्देन समाजे समादृतं शिष्टैर्गृहीतं निगृहीतं च ।

तत्रैव शक्तिविशिष्टाद्वैतस्य माहेश्वरमतापराभिधानस्य मतनिरूपणपरोऽयं ग्रन्थः "शिवाद्वैतपरिभाषा" इति नाम्ना वर्तते । अयं च कन्नडलिप्यां लिखितोऽपि भाषाभेदो हि वर्तते पदार्थभेदो न विद्यते "पात्रभेदो हि भवति स्वादभेदो न जायते" इति न्यायात् शास्त्रपद्धतिमनुसृत्यैव निर्मितः । किन्तु संस्कृतभाषैव एका सम्पूर्णे भारते किं विश्वप्रपञ्चे लोकपरलोके च गगनवदभिद्यमाना समाना समानु-

पूर्वीका लिख्यते व्यवह्रियते चेति सर्वजनसौलभ्याय संस्कृते विपरिणतोऽयं ग्रन्थः। ताहृशकर्मसम्पादकश्च आयुष्मान् विद्वान् डॉ० चन्द्रशेखरशर्मा हिरेमठः।

मुद्रणात्पूर्वं मत्समक्षं ग्रन्थोऽयं न दर्शितः। न च मया परिशोधितः। सम्मति-लेखनसमये आपाततो दर्शनेन मुद्रणगताः पदाशुद्धयः पदार्थाशुद्धयश्च तत्र तत्र समवलोकिताः। तत्कथनेन निसर्गतः सत्यस्य कटुत्वादेषां खेदो जात इति मया स्थले स्थले पदाशुद्धिः पदार्थाशुद्धिश्च दूरीकृता। अतोऽहं निवेदये यदाग्रहवशादेव न कोऽपि ग्रन्थो भूमिका वा सम्पादनीया, किन्तु "यो यमर्थं जानीयात्तं तत्र विनियोजयेत्" इति कामन्दकोक्तन्यायेन विज्ञं सम्प्राप्य परिशोध्य परिभाव्य च ग्रन्थाः प्रकाशनीयाः।

समीचीनोऽयं ग्रन्थः। पदार्थनिरूपणशैली च शोभना। लक्षणस्य लक्षणं यत्कृतं यद् अव्याप्त्यतिव्याप्त्यसम्भवशून्यं लक्षणमिति तन्न युज्यते। यतो हि शून्यान्तमिति तु विशेषणं विशेष्यन्तु न निर्दिष्टमिति महती विडम्बना स्यात्। अतो नेदं लक्षणस्य लक्षणे प्रविष्टम्। किन्तु वस्तुस्थितिरियं यद् लक्षणं यद्भवति तदेतद्दोषत्रयशून्यमेवेति। तर्हि लक्षणस्य लक्षणं किमिति चेद् अत्रेदं विज्ञातव्यम्—वस्तुमात्रस्य लक्षणप्रमाणाभ्यामेव सिद्धेर्लक्षणस्यापि वस्तुत्वाद-विशेषात् तस्यापि लक्षणं वक्तव्यमिति प्राप्ते—"असाधारणधर्मो लक्षणम्" धर्मे-ऽसाधारण्यञ्च लक्ष्यतावच्छेदकसमनियतत्त्वम्। समनियतत्त्वञ्च व्याप्यत्वे सति व्यापकत्वम्। इत्येव मात्सर्यमपाकृत्य मन्तव्यमिति संक्षेपतो निर्दिशामि।

यद्यपि "पत्युरसामञ्जस्यात्", "सम्बन्धानुपपत्तेश्च", "अधिष्ठानानुपपत्तेश्च" (ब्र० सू० २.२.३७, ३८, ३९) इत्त्रादिसूत्रैः पाशुपतमतस्य निराकरणं कृतमिति शाङ्करभाष्यभामतीकल्पतरुपरिमलादिग्रन्थेषु स्पष्टतया दृश्यते, तथापि तस्य निराकरणमकारि श्रीकरभाष्ये भगवत्पादैः श्रीपतिपण्डिताराध्यैः संक्षेपतो विस्तरतश्च विनापि नामग्राहमिति तत्रैव द्रष्टव्यम्। अत्र विषये नहि किमपि साम्प्रतं वक्तुं कामये।

महाशिवरात्रिः, वाराणसी

देवस्वरूपमिश्रः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सांख्ययोगतन्त्रागमविभागाध्यक्षचराणां शास्त्रचूडामणीनां श्रीव्रजवल्लभद्विवेदमहोदयानां
शुभाशंसनम् ।

श्रीनीलकण्ठशिवाचार्यविरचिता शिवाद्वैतपरिभाषा वीरशैवदर्शनस्य द्वैताद्वैतमतमुपजीवतो विशिष्टो ग्रन्थो दशप्रकरणात्मकः। "शिवाद्वैतसिद्धान्तोऽयं द्वैताद्वैतबोधकसर्वश्रुतिसमन्वयसम्पादितः" (पृ० ३८) इत्यादिना नवमे प्रकरणे सविशेषं सिद्धान्तोऽयं प्रतिपाद्यते। तत्रैव वीरशैवपदनिरुक्तिरपि प्रदर्श्यते। उद्देश्य-लक्षण - प्रत्यक्ष-अनुमान-शब्द - कार्यकारणभाव-षट्त्रिंशत्तत्त्व - परशिव-शिवाद्वैत-लिङ्गाङ्गसामरस्यप्रतिपादकेषु दशसु संक्षिप्ततमेषु प्रकरणेषु सर्वान् दार्शनिकान् प्रमाणप्रमेयादीन् विषयान् संगृह्य नूनं ग्रन्थकारेण घटे सागरः संनिवेशितः। श्रुतिस्मृतीनां शैवागमानां दर्शनानां चात्र वीरशैवमतपोषकत्वमद्भुतया पद्धत्या सरलया च संस्कृतगिरा गीतम्। अत्रत्या नैके विषयाः शिवशक्तिषट्त्रिंशत्तत्त्वादयः शिवागमेष्वपि यथायथं प्रतिपादिता विद्यन्ते। तत्रत्यश्च क्रमः सांख्ययोगपद्धत्या यत्र क्वचन भिद्यते। तथाप्यत्र काचन नूतनैव शैली स्वीकृता, सा च प्राधान्येन श्रीरेणुकभगवत्पादोपदिष्टस्य सिद्धान्तशिखामणेः पद्धतिमनुसरति। सर्वमेतद् ग्रन्थावलोकनतः स्फुटीभवेत्।

ग्रन्थस्यास्य कर्ता पूवल्लीबृहन्मठचरपट्टाध्यक्षतर्कतीर्थवेदान्तविशारदसांख्यालङ्कारन्यायवाचस्पतीत्यादिबिरुदालङ्कृतः श्रीमान् नीलकण्ठशिवाचार्य इति प्रकरणग्रन्थसमाप्तिस्थपुष्पिकावाक्येभ्योऽधिगम्यते। ग्रन्थकारस्य देशकालादिविचारोऽस्य ग्रन्थस्य सम्पादकेन 'हिरेमठ' इत्युपाह्वेन श्रीमता डॉ० चन्द्रशेखरशर्मणा विद्वत्ताभरितायां भूमिकायां कृतस्तत्रैव द्रष्टव्यः। अस्य विदुषो जन्मस्थानस्य 'हूली'—ग्रामस्य वैशिष्ट्यमस्माभिस्तन्त्रयात्रायां (पृ० ३४९) वर्णितम्। कथं नाम मानवमानससंस्कारे स्थानानामपि प्रभावः प्रस्फुरतीति निदर्शनभूतोऽयमत्र तत्रभवान् नीलकण्ठशिवाचार्य एव।

अत्र संक्षिप्तायां भूमिकायां सम्पादकेन विदुषा वीरशैवमतस्य साहित्यस्य च परिचयः संक्षिप्ततमः समुपस्थापितः। विषयस्यास्य विस्तरस्तु तेन स्वकीये शोधप्रबन्धे "सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा" इत्याख्ये कृतः। भारतीविद्यानिष्णातः प्रख्यातः पाश्चात्यो विद्वान् डॉ० जे० गोण्डामहोदयः स्वकीये

"चेंज एण्ड कन्टीन्यूइटी इन इण्डियन रिलीजन" इत्याख्ये ग्रन्थे लिखति यद् हडप्पामोहेंजोदडोयुगीना जनास्तथैव शिवलिङ्गं धारयन्ति स्म, यथा हि साम्प्रतिका वीरशैव( लिङ्गायत )सम्प्रदायानुयायिनो बिभ्रति ( पृ० ३१ )। एतेन वीरशैवसिद्धान्तस्य प्राचीनता सिद्ध्यति। सोऽयं प्राचीनतमः सिद्धान्तोऽधुना शिवाद्वैत-शक्तिविशिष्टाद्वैत-विशेषाद्वैत-षट्स्थल-लिङ्गाङ्गसामरस्य-शिवयोग-महापाशुपतप्रभृतिभिर्नामभिः परिचीयते।

तदस्य ग्रन्थस्य भूमिकापरिशिष्टादिभिः संयोजितस्य शोभनं संस्करणमुपस्थापयता सम्पादकेन न केवलं वीरशैवमतानुयायिनः, प्रत्युत भारतीयदर्शनानुरागिणः सर्वे बहूपकृताः। श्रीकाशीपीठमधिवसतां श्रीजगद्गुरुविश्वाराध्यज्ञानसिंहासनाधीश्वराणां श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिनामार्थिकेन साहाय्येन शुभाशीर्वचोभिश्च प्रोत्साहितेन सम्पादकेन तदिदं शुभं कर्म निर्वृत्तम्। एवमेव भविष्यत्यपि प्रचलत्वयं ज्ञानयज्ञो विश्वकल्याणायेति भगवान् विश्वेश्वरः प्रार्थ्यते।

महाशिवरात्रिः, वाराणसी। ब्रजवल्लभद्विवेदः

श्रीः

# भूमिका

इह खलु सर्वे सुखमेव कामयन्ते, अथापि सुखस्यामोघं साधनमजानन्तो मुहुर्मुहुर्दुःखमेवानुभवन्तीति विज्ञाय प्राचीना ऋषय आचार्याश्च नित्यनिरतिशयसुखावाप्तिसाधनत्वेन दर्शनशास्त्रमुपदिष्टवन्तः। "दृशिर् प्रेक्षणे" (भ्वा. १०५७) इति धातोः ल्युटि अनादेशे दर्शनशब्दो निष्पद्यते। तस्मात् "दृश्यते साक्षात्क्रियते परमतत्त्वं येन तद् दर्शनम्" इति व्युत्पत्त्या तत्त्वज्ञानसाधनं शास्त्रं दर्शनमित्युच्यते। भारते देशे नास्तिकास्तिकभेदेन दर्शनानां द्वैविध्यं व्यवस्थापितम्। तत्र वेदप्रामाण्याङ्गीकारान्न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसाख्यान्यास्तिकदर्शनानीति, तद्विपरीतानि चार्वाक-जैन-बौद्धाख्यानि नास्तिकदर्शनानीति व्यपदिश्यन्ते।[1]

एतदतिरिक्तमागमसम्मतानि शैव-वीरशैव-वैष्णव-शाक्ताख्यानि सन्ति बहूनि दर्शनानि। अत एव पारमेश्वरतन्त्रे—

वीरशैवं वैष्णवं च शाक्तं सौरं विनायकम्।
कापालमिति विज्ञेयं दर्शनानि षडेव हि॥[2]

इत्यागमसम्मतषड्दर्शनानि निरूपितानि सन्ति।

निगमागमाख्ये भारतीये द्वे शास्त्रे न परस्परप्रतिद्वन्द्विनौ, किन्तु परमात्मनिःश्वसितरूपो निगमः, आगमस्तु वाग्रूप इति सर्वजननिश्चप्रचम्। अत एव "निश्चयेन तत्त्वं गमयतीति निगमः" इति निगमस्य, "आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः" इत्यागमस्य च व्युत्पत्तिः सङ्गच्छते। अगाधज्ञानभाण्डारस्य निगमस्य विरुद्धनानावादिसंशयास्पदत्वादनेन सामान्यजनानामुपकारो न भवेदिति निश्चित्य लोककल्याणबद्धपरिकरः शङ्करः सर्वजनोपयोगिवेदार्थविवरणरूपानागमान् देव्यै पार्वत्यै समुपदिदेश। तथाह्युक्तम्—

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे।
मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः॥[3] इति।

---

१. नास्तिको वेदनिन्दकः (मनु. स्मृ. २.११)

२. पा. तन्त्र. १.२२-२३, पृ० ३

३. भास्करी. भाग. २. पृ० ८५

अयं चागमशब्दस्य रूढ्यर्थः। अस्य यौगिकार्थस्तु—

"आसमन्ताद् अर्थं गमयति" इति "आगमः" इति। अत एव "सर्ववेदेषु यद् दृष्टं तत्सर्वं तु शिवागमे" इति वीरागमोक्तिरत्र सङ्गच्छते।

तदागमशास्त्रमपि शैव-वैष्णव-शाक्तभेदेन त्रिधा भवति। तत्र वैष्णवागमाः (पाञ्चरात्रागमाः) विशिष्टाद्वैतप्रतिपादकाः, शाक्तागमा अद्वैतप्रतिपादकाः, शैवागमाश्च द्वैत-अद्वैत - द्वैताद्वैत-विशिष्टाद्वैत-विशेषाद्वैताभिधशक्तिविशिष्टाद्वैत-प्रतिपादका भवन्ति। तत्र पाशुपतं सिद्धान्तशैवञ्च द्वैतम्, प्रत्यभिज्ञादर्शन-(काश्मीरशैवदर्शन)मद्वैतम्, लकुलीशपाशुपतं द्वैताऽद्वैतम्, श्रीकण्ठशैवदर्शनं शैवविशिष्टाद्वैतम्, वीरशैवदर्शनञ्च विशेषाद्वैताभिधशक्तिविशिष्टाद्वैतसिद्धान्त-प्रतिपादकमिति विज्ञेयम्।

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्॥[1]

इति श्रीजगद्गुरुरेणुकभगवत्पादोक्त्या सिद्धान्तशब्दितानामष्टाविंशति-शैवागमानामुत्तरभागे वीरशैवमतं निरूपितं वर्तते। सनातनमिदं वीरशैवमतं प्रतियुगं रेवणसिद्ध-मरुलसिद्ध-एकोराम-पण्डिताराध्य-विश्वाराध्याख्यैर्भुवन-प्रसिद्धैः पञ्चाचार्यैः प्रतिष्ठाप्यत इत्यागमसम्मतिर्वर्तते।

तदेवं पञ्चाचार्यैः संस्थापितस्यास्य वीरशैवदर्शनस्य चरमलक्ष्यं दर्शनान्त-रेष्विव मुक्तिरित्येवाङ्गीक्रियते। अत्र—

जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।
निरस्यते गुरोर्बोधाद् ज्ञानशक्तिः प्रकाशते॥[3]

इति श्रीरेणुकभगवत्पादोक्त्या अनादिमलत्रयावरणेन जीवभावमापन्नस्य गुरुर्दीक्षात्रयेण तानि निवार्य परशिवस्वरूपबोधनद्वारा तज्ज्ञानशक्तिं विकासयतीतीदं वैशिष्ट्यमस्य दर्शनस्य।

## वीरशैवसाहित्यम्

वेदागमोपनिषत्पुराणेतिहासेषु तत्र तत्र बहुस्थानेषु वीरशैवसिद्धान्तः प्रति-पादित उपलभ्यते। एतदतिरिक्तमस्य दर्शनस्य सिद्धान्तशिखामणिः, श्रीकर-

---

१. सिद्धान्तशिखामणिः, ५.१४ पृ० ५७

२. "सिद्धान्तशब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशतन्त्रेषु प्रसिद्धः" (रत्नत्रये, पृ० ५)

३. सिद्धान्तशिखामणिः, १८.१७ पृ० १३३

भाष्यम्, शिवाद्वैतमञ्जरी, क्रियासारः, अनुभवसूत्रम्, वीरशैवानन्दचन्द्रिका, लिङ्गधारणचन्द्रिकेत्यादयः संस्कृतभाषामयाः बहवो ग्रन्था उपलभ्यन्ते। एवमेव कन्नड-मराठी-तेलगु-आङ्ग्ल-तमिलभाषासु च विपुलं वीरशैवसाहित्यं वर्तते। ग्रन्थगौरवभयात् तेषां नामानि नोल्लिखितानि।

## प्रकृतग्रन्थस्य ( शिवाद्वैतपरिभाषायाः ) परिचयः

तदेवं संस्कृतवाङ्मये सत्यपि विपुले वीरशैवसाहित्ये पूवल्ली (हूली)-बृहन्मठस्य चरपट्टाधिकारिणा तर्कतीर्थेन श्रीनीलकण्ठशिवाचार्यमहास्वामिना प्राक्तनः शक्तिविशिष्टाद्वैतापरपर्यायः शिवाद्वैतसिद्धान्तो नवीनशैल्या संक्षेपेण शिवाद्वैतपरिभाषाख्यग्रन्थरूपेण संग्रथितः।

यथा शास्त्रान्तरेषु बालानां सिद्धान्तसुखबोधाय "वेदान्तपरिभाषा", "शैवपरिभाषा" इत्यादयो ग्रन्था उपलभ्यन्ते तथैवास्यापि ग्रन्थस्य प्रयोजनमूह्यम्। ग्रन्थोऽयं कर्णाटकसर्वकारेण प्रचाल्यमानायां विद्वन्मध्यमापरीक्षायां शक्तिविशिष्टाद्वैतवेदान्तविषये पाठ्यरूपेण नियुक्तोऽस्ति।

### ग्रन्थविषयविवरणम्

ग्रन्थेऽस्मिन् दशप्रकरणानि सन्ति। तत्र प्रथमे उद्देशाख्ये प्रकरणे शिवाद्वैतापरपर्यायवीरशैवसिद्धान्ताभिप्रेतानां शिव-जीव-शक्त्याख्यानां पदार्थत्रयाणां केवलं नामतो निर्देशनं कृतम्।

द्वितीयप्रकरणे "लक्षण-प्रमाणाभ्यां वस्तुसिद्धिः" इति न्यायेन तेषामेव त्रिपदार्थानामव्याप्ति–अतिव्याप्ति–असंभवादिदोषपरिहारपुरःसरं लक्षणानि निरुक्तानि।

अनन्तरं पदार्थसिद्धावपेक्षितानि शिवाद्वैतसिद्धान्ताभिप्रेतानि प्रत्यक्षानुमान-शब्दाख्यानि प्रमाणत्रयाणि क्रमशस्तृतीय-चतुर्थ-पञ्चमप्रकरणेषु विस्तरेण निरूपितानि सन्ति।

षष्ठप्रकरणे प्रपञ्चोत्पत्तौ हेतुभूतानां उपादान-निमित्ताख्यानां कारणानां स्वरूपं शिवाद्वैतसिद्धान्तानुरूपं विमर्शितं वर्तते।

सप्तमे प्रकरणे शिव-शक्त्यादिभूम्यन्तानां षट्त्रिंशत्तत्त्वानां क्रमश उत्पत्तिस्तथा तेषां स्वरूपं तावत् प्रपञ्चितम्।

अष्टमे प्रकरणे सर्वस्यापि प्रपञ्चस्य शिवमयत्वम्, शिवस्य सर्वान्तर्यामित्वं च वीरशैवसिद्धान्तानुरूपं निरूपितं वर्तते।

नवमप्रकरणे शिवाद्वैतसिद्धान्तस्य पर्यायनाम्नां शक्तिविशिष्टाद्वैत-विशेषाद्वैत-षट्स्थल-लिङ्गाङ्गसामरस्य-शिवयोग-महापाशुपताख्यानां व्युत्पत्तिः प्रदर्शिता। अपि च, भेदाऽभेदात्मकेऽस्मिन् सिद्धान्ते "एकमेवाद्वितीयम्"[1], "नेह नानास्ति किञ्चन"[2], "द्वा सुपर्णा सयुजा सखाया"[3] इत्यादिरूपेण परस्परविरुद्धानां द्वैताऽद्वैतश्रुतीनां समन्वयप्रकारो बहुस्वारस्येन प्रतिपादितो वर्तते।

अन्ते च दशमे प्रकरणे वीरशैवसिद्धान्ताभिप्रेतं शिव-जीवापरपर्याययोर्लिङ्गाङ्गयोः सामरस्याख्यं मोक्षस्वरूपं निरूपितं वर्तते।

## ग्रन्थकारस्य संक्षिप्तमितिवृत्तम्

ग्रन्थकारोऽयं श्रीनीलकण्ठशिवाचार्यः कर्णाटकप्रदेशान्तर्गते बेलगांवमण्डले "हूली" इत्याख्ये ग्रामे १८२२ तमे शालिवाहनशकवर्षे लब्धजन्मा बभूव। अस्य पिता "महान्तय्या", माता च "गंगम्मा" आसीत्। वीरशैवसिद्धान्तानुयायिनोः शिवभक्तिसम्पन्नयोर्दम्पत्योरुदरे समुत्पन्नोऽयं श्रीनीलकण्ठशिवाचार्यः स्वप्राथमिकाध्ययनं स्वग्रामे कृत्वा संस्कृतशास्त्राध्ययनार्थं काशीमागत्य अत्रत्ये जंगमवाडिमहामठे आश्रयं लब्ध्वा न्याय-सांख्य-वेदान्त-साहित्यादिशास्त्रेषु कृतपरिश्रमस्तर्कतीर्थ-वेदान्तविशारद-सांख्यालङ्कार-न्यायवाचस्पतीत्यादि-पदवीमिभूषयांबभूव।

स्वाध्यायसमाप्त्यनन्तरमेते महाभागाः पुत्रवर्गपरम्परानुसारेण प्राचीनस्य, इतिहासप्रसिद्धस्य च हूलीसिंहासनबृहन्मठस्य चतुश्चत्वारिंश(४४)च्चरपट्टाधिकारित्वं स्वीचक्रुः।

धर्माधिकारग्रहणानन्तरं स्वपरमसुहृदा नागनूरुबृहन्मठाध्यक्षेण प० काशीनाथशास्त्रिमहाभागेन सह मिलित्वा कर्णाटकादिप्रदेशेषु वीरशैवगुरुवर्गसम्मेलनादिकं कृत्वा सनातनवीरशैवधर्मतत्त्वानि सम्यक् प्रचार्य दिगन्तविश्रान्तकीर्तयो भूत्वा ख्रि० श० १९७१ तमेऽब्दे शिवसायुज्यं प्राप्तवन्तः। एते न केवलं दर्शनशास्त्रज्ञा आसन्, अपितु मन्त्र-तन्त्रप्रयोगकुशलाः शिवयोगसिद्धाश्चासन्।

## एतद्ग्रन्थकृतो ग्रन्थान्तराणि

शिवाद्वैतपरिभाषाकारेण श्रीमता नीलकण्ठशिवाचार्यमहास्वामिना रचिता अन्येऽपि कतिपयग्रन्था विद्यन्ते। वाचकानामवगाहनाय तेषां नामानि निर्दिश्यन्ते। तत्र शिवानुभवदीपिका—वीरशैवसिद्धान्तचूडामण्याख्यौ द्वौ ग्रन्थौ

---

१. छान्दोग्यो. ६.२.१ २. कठो० ४.११ ३. मुण्ड. ३.१.१

वीरशैवसिद्धान्तप्रतिपादकौ विद्येते । विजयध्वजविलासाख्यं काव्यम्, सुरभारती-विलासाख्यं नाटकं चेति संस्कृत-श्रव्य-दृश्यकाव्ये प्रथिते वर्तेते । कन्नडभाषायां च तुरुकारिपञ्चमानामितिहास-हूलीसिंहासनबृहन्मठस्य संक्षिप्तेतिहासाख्यौ द्वौ इतिहासग्रन्थौ एतत्कर्तृत्वेनोपलभ्येते । एतदतिरिक्तं शिवानुभवशिवाचार्य-कृतस्य शिवाद्वैतदर्पणस्य सम्यक् सम्पादनं कृत्वा टिप्पणीभिः समलङ्कृत्य च ग्रन्थममुमेते देवनागराक्षरेण प्रकाशयामासुः । तदेवमेभिर्वीरशैवग्रन्थनिर्माण-सम्पादनादिकार्यैर्वीरशैवसाहित्यं परिवर्धितमिति प्रमोदविषयः ।

## ग्रन्थसम्पादनहेतुः

शिवाद्वैतपरिभाषाख्योऽयं ग्रन्थ इतः प्राक् श्रीमद्भिः काशीनाथशास्त्रिमहा-भागैर्मैसूरनगरे कन्नडाक्षरेण मुद्रापयित्वा प्रकाशित आसीत् । कन्नडाक्षरमयस्या-स्योपयोगः प्रदेशान्तरीयाणां संस्कृतज्ञानां तत्त्वजिज्ञासूनां न स्यादिति कृत्वा देवनागराक्षरेणास्य सम्पादनचिकीर्षा मन्मनसि समजायत । तदानीमेतद्ग्रन्था-धिकारिभ्यः प० काशीनाथशास्त्रिमहाभागानुजेभ्यः प० बृ० महादेवय्य-महोदयेभ्योऽनुमतिं गृहीत्वा कन्नडाक्षरमयं पुस्तकं देवनागराक्षरेण लिप्यन्तरी-कृत्य ग्रन्थोद्धृतानि वेदागमोपनिषद्वाक्यानि यथाशक्त्यामृग्याधस्ताद् टिप्पणीरूपेण तेषां स्थलनिर्देशः कृतोऽस्ति । मन्येऽनेन ममाल्पपरिश्रमेण बहूनामुपकारः स्यादिति ।

## कृतज्ञतासमर्पणम्

सम्पादनकर्मणि प्रवृत्तस्य कस्यापि सम्पादकस्य कर्म व्यक्त्यन्तरसहायं विनैव न पूर्णतामेति । अतोऽत्र मम कर्मण्युपकुर्वतामादरणीयानां विदुषां श्रद्धास्पदानां गुरुवर्याणामत्रोपकृतिस्तावत् स्मर्यते ।

तत्र प्रथमं ग्रन्थकाराः श्रीनीलकण्ठशिवाचार्यमहाभागाः कृतज्ञतार्हाः सन्ति । ये महानुभावाः कन्नडभाषामयान् ग्रन्थान् विरचय्य शिवाद्वैतसिद्धान्ततत्त्वजिज्ञासू-नवबोध्य वीरशैवसिद्धान्तप्रचारकर्मणि बहूपकृतवन्तः ।

अतः परमहं काशीजङ्गमवाडीमहामठसंस्थानाधीश्वराणां श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिनां दिव्यचरणारविन्दयोः प्रणामान् समर्प्य स्वकृतज्ञतां विज्ञापयामि । ये महानुभावा देवनागराक्षरेण मया सम्पादितममुं ग्रन्थं जङ्गमवाडीमठस्य शिवधर्मग्रन्थमालायां प्रकाशनार्थमनुमतिं प्रदाय सर्वमप्यार्थिकसाहाय्यं कृतवन्तः ।

प्रसङ्गेऽस्मिन् मैसूरनगरनिवासी पञ्चाचार्यप्रभासम्पादकः श्री० पं० बृ०

महादेवय्यमहोदयः साधुवादार्होऽस्ति । ग्रन्थाधिकारिणा येन एकवारं यावत् देवनागराक्षरेण सम्पाद्य मुद्रणार्थं मेऽनुमतिः प्रदत्ता ।

अथाऽहं शैव-शाक्त-तान्त्रिकादिवाङ्मये विश्वविश्रुतयशस्केभ्यः सर्वोपकार-कर्तृभ्यः सततलेखननिरतेभ्यः कर्मयोगिभ्यः साम्प्रतं सम्पूर्णानन्द-संस्कृतविश्व-विद्यालयस्य सांख्य-योगतन्त्रागमविभागाध्यक्षचरेभ्यः श्रीमद्भ्यः प० व्रज-वल्लभद्विवेदमहोदयेभ्यः सविनयं सश्रद्धं प्रणामाञ्जलिमुपहरामि । एते महानुभावा देवनागराक्षरेण मया सम्पादितममुं ग्रन्थमामूलाग्रं समवलोक्य लेखनगता अशुद्धीः परिमार्ज्य ग्रन्थममुं निर्दोषं कृतवन्तः । अनभिज्ञसम्पादन-कार्योऽहमेतेषामेव मार्गदर्शनेन सम्पादनकर्मणि सफलोऽभवम् । पुनरेभिरेव मदीय-प्रार्थनानुसारेण पाण्डित्यपूर्णं स्वाभिप्रायपरं शुभाशंसनं प्रदाय ग्रन्थगौरवः संवर्धितः ।

अतः परं वेदान्तविद्यागुरूणां महामहिमशालिनां निखिलशास्त्रवेतॄणां शास्त्रार्थकलाविशारदानां विनेयानहर्निशमध्यापयतां साम्प्रतं सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वतां डा० देवस्वरूपमिश्रमहा-भागानां चरणयोः सश्रद्धं प्रणामाञ्जलिमुपहरामि, यैर्महानुभावैरहं वेदान्तशास्त्रस्य ग्रन्थान् सुतनिर्विशेषतया सम्पाठ्य वेदान्ताचार्यपदवीं प्रापितः । ततः "सिद्धान्त-शिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा" इति विषयमधिकृत्यानुसन्धाने प्रवृत्तस्य मम निर्देशकत्वमङ्गीकृत्य इतस्ततोऽज्ञानकान्तारसञ्चारिणो मम सम्यङ्मार्गनिर्देशनं कृत्वा शोधप्रबन्धस्य पूर्णता प्रापिता । एतेषां कुशलमार्ग-निर्देशनेनैव मम शोधप्रबन्धे नावीन्यमागतं शीघ्रमेव Ph. D. उपाधिरधिगतश्च । एतेऽपि महानुभावा मदीयप्रार्थनामनुरुध्य "शिवाद्वैतपरिभाषा"मुद्दिश्य स्वाभिप्रायपरं शुभाशंसनं प्रदाय ममोत्साहं संवर्धितवन्तः ।

अन्ते चाहं सम्पूर्णानन्दसंस्कृतविश्वविद्यालये कन्नडप्राध्यापकपदालङ्कार-भूतान् प० शान्तशर्महिरेमठमहाभागान् तथा विश्वविद्यालयीयमुद्रणालये वरिष्ठेक्ष्यशोधकपदभाजः श्रीहरिवंशत्रिपाठिशास्त्रिमहोदयान् ईक्ष्यशोधनकार्य-करणेनोपकुर्वतो भूयो भूयो धन्यवादसमर्पणेन परितोषयामि ।

एतदतिरिक्तं ग्रन्थेऽस्मिन् येषां विदुषां तत्कृतीनां वोपयोगो विहित-स्तेभ्यः सर्वेभ्यो वर्तमानेभ्यः प्राचीनेभ्यश्च सश्रद्धं प्रणामाञ्जलिमुपहरामि ।

जङ्गमवाडीमठः, वाराणसी
महाशिवरात्रिः, वि० २०३९
११-२-१९८३ ई०

विदुषां वशंवदः
चन्द्रशेखरशर्मा हिरेमठः

# विषयसूची

# शिवाद्वैतपरिभाषा

## नीलकण्ठशिवाचार्यविरचिता

### प्रथमं प्रकरणम्

ॐ नमो घनलिङ्गाय सच्चिदानन्दरूपिणे ।
शक्तिसम्पद्विशिष्टाय शिवाय परमात्मने ॥ १ ॥
ब्रह्मानन्दसुधासिन्धुं ज्ञानबन्धुरमन्दिरम् ।
वन्दे वृन्दारकैर्वन्द्यं स्कन्दं श्रीशिवनन्दनम् ॥ २ ॥
विश्वेशलिङ्गसंभूतं विश्वविद्याविबोधकम् ।
विश्ववन्द्यं सदा वन्दे विश्वाराध्यं जगद्गुरुम् ॥ ३ ॥
सिद्धाद्रिनिलयं सर्वसिद्धिसम्पत्प्रदायकम् ।
सिद्धनञ्जेश्वरं नौमि सिद्धसन्ताननायकम् ॥ ४ ॥
काशीविश्वेश्वरं नत्वा काशीपीठपतिं तथा ।
काशीनाथंबुधप्रीत्यै परिभाषा विरच्यते ॥ ५ ॥
त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः ।
सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुरा ॥ ६ ॥

अथातः पदार्थमीमांसा प्रारभ्यते । तत्र तावदुद्देशलक्षणपरीक्षापुरःसरं पदार्थप्रतिपत्तिः पण्डितानां सम्मतेति प्रथममुद्देशग्रन्थनिरूपणं प्रस्तूयते ।

नाममात्रेण वस्तुसंकीर्तनमुद्देशः । तत्र प्रमेयः पदार्थः । स च 'अभिधेय' इति पर्यायेणोच्यते । शिव-जीव-शक्तय इति त्रयः पदार्थाः । तत्र शिवो लिङ्ग-ब्रह्म-परम-स्थलादिशब्दैरभिधीयते । स तु एक एव । [1]"एकमेवाऽद्वितीयम्", [2]"एको रुद्रो न द्वितीयाय तस्थे" इत्यादिश्रुतिभिस्तस्यैकत्वावगमात् । जीवस्तु अङ्ग-पुरुष-संसारि-क्षेत्रज्ञादिशब्दैरभिधीयते । स तु प्रतिशरीरं भिन्नस्त्वनन्तश्च,

[3]वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ।
नैव स्त्री न पुमानेष न चैवाऽयं नपुंसकः ।
यद्यच्छरीरमाधत्ते तेन तेन स युज्यते ॥

१. छा. उ. ६।२।१ २. श्वे. उ. ३।२ ३. श्वे. उ. ५।९-१०

"अंशो नानाव्यपदेशात्"[1]

इत्यादिश्रुतिसूत्रैस्तस्यानेकत्वावगमात्।

सूक्ष्म-स्थूलात्मकविश्वमेव शक्तिः। सा च परा-प्रज्ञा-विमर्श-धर्म-माया-प्रकृत्याद्यभिधानैरभिधीयते। सा अनेकविधापि सामान्यतस्त्रिधा, शुद्धा-शुद्धाशुद्धा-अशुद्धेतिभेदात्। "पराऽस्य[2] शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "स[3] जालवानीशत ईशनीभिः परमशक्तिभिः", "प्रज्ञा[4] च तस्मात् प्रसृता पुराणी", "मायां तु[5] प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", [6]"शक्तिरेतज्जगत्सर्वं शक्तिमांस्तु महेश्वरः", "मं[7] शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः। मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी॥" इत्यादिना शक्तिस्वरूपं निगमागमेषु बहुधा प्रपञ्चितम्।

यथा[8] चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा॥

इति सिद्धान्तशिखामणौ श्रीरेणुकभगवत्पादैः शक्तिस्वरूपं प्रतिपादितम्।

तत्र शुद्धा शक्तिश्चतुर्विधा, शक्ति-सदाशिव-ईश्वर-शुद्धविद्येतिभेदात्।

शुद्धाशुद्धशक्तिरपि षड्विधा, माया-कला-विद्या-राग-काल-नियति-भेदात्। सेयं षट्तत्त्वात्मिका जीवात्मनः स्वस्वरूपावरककञ्चुकप्रायत्वात् षट्कञ्चुकमित्यभिधीयते। तदावृतस्वरूपत्वाज्जीवोऽयं 'अज्ञ' इत्युच्यते। अयमपि शुद्धाशुद्ध एव। तत्र सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। अन्तःकरणं त्रिविधम्, बुद्धि-अहङ्कार-मनोभेदात्।

ज्ञानेन्द्रियं पञ्चविधम्, श्रोत्र-त्वक्-चक्षुः-जिह्वा-घ्राणभेदात्। कर्मेन्द्रियं पञ्चविधम्, वाक्-पाणि-पाद-पायु-उपस्थभेदात्। तन्मात्रं पञ्चविधम्, शब्द-स्पर्श-रूप-रस-गन्धभेदात्। भूतं च पञ्चविधम्, आकाश-वायु-वह्नि-जल-पृथिवीभेदात्।

इति श्रीपूवल्लीबृहन्मठचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वश्री-
नीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां
उद्देशग्रन्थनिरूपणं नाम प्रथमं प्रकरणम्॥

---

१. ब्र. सू. २।३।४३ २. श्वे. उ. ६।८ ३. स्थलं नोपलभ्यते।
४. श्वे. उ. ४।१८ ५. श्वे. उ. ४।१० ६. द्रष्टव्यं श्रीकण्ठभाष्यम्
७. द्रष्टव्यं श्रीकण्ठभाष्यम्. ८. सि. शि. २०।३२.

## द्वितीयं प्रकरणम्

अथ "लक्षणप्रमाणाभ्यां वस्तुसिद्धिः" इति न्यायाल्लक्षणमुखेन पदार्थसिद्धिर्निरूप्यते।

तत्र लक्षणं नाम अतिव्याप्त्यव्याप्त्यसंभवरूपदोषत्रयरहितम्। तथा च लक्षितस्य लक्षणं संभवति न वेति विचारः परीक्षा। तत्र अलक्ष्ये लक्षणगमनमतिव्याप्तिः। यथा शृङ्गित्वं गोर्लक्षणं कृतं चेत्, महिषादौ तद्गमनमस्ति। सा च अतिप्रसक्ति-अतिप्रसङ्गादिशब्दैरभिधीयते। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा कपिलरूपवत्त्वं गोर्लक्षणं कृतं चेत्, लक्ष्यैकदेशे कृष्णगवादाववृत्तित्वमस्ति। लक्ष्यमात्रावृत्तित्वमसंभवः। यथा एकशफवत्त्वं गोर्लक्षणं कृतं चेत्, लक्ष्यमात्रे गवि तदवृत्तित्वमस्ति। एतद्दोषत्रयविशिष्टं लक्षणं न भवति। किन्तु सास्नादिमत्त्वं गोर्लक्षणं भवति, दोषत्रयराहित्यात्। अस्यैवासाधारणधर्मरूपत्वमङ्गीक्रियते, लक्ष्यलक्षणयोर्धर्मिधर्मभावविवक्षणेन प्रत्येकलक्ष्यप्रतिपादने तद्धर्मस्यासाधारणत्वावश्यकत्वात्।

तत्र प्रमेयत्वमभिधेयत्वं वा पदार्थसामान्यलक्षणम्, पदार्थतद्ज्ञानयोर्विषयविषयीभावसम्बन्धात्। प्रमेयत्वं हि प्रमाज्ञानविषयत्वमित्यर्थः। अभिधेयत्वं च शब्दशक्यत्वमित्यर्थः। "अस्माच्छब्दादयमर्थो बोद्धव्यः" इतीश्वरेच्छारूपशक्तेः शब्दार्थसम्बन्धरूपतावगमात् सर्वत्र लक्षणसमन्वयः।

तत्र सूक्ष्मचिदचिद्रूपशक्तिविशिष्टत्वं परशिवस्य लक्षणम्। जीवात्मन्यतिव्याप्तिवारणाय सूक्ष्मेति शक्तेर्विशेषणम्। सूक्ष्मत्वं च निर्मलत्वम्, त्रिकालबाधितमलात्यन्ताभाववत्त्वमिति यावत्। तेन मुक्तेः प्राक्काले मलविशिष्टेषु मुक्तावस्थायां मलात्यन्ताभाववत्सु मुक्तात्मसु नातिव्याप्तिः। तेषामपि शिवस्वरूपत्वेन ब्रह्मलक्षणलक्ष्यत्वाङ्गीकारे ब्रह्मानन्त्यप्रसङ्गः। इष्टापत्तौ "एकमेवाद्वितीयम्[1]" इत्यादिश्रुतिशतविरोधापत्तिरद्वैतहानिश्च। लक्षणेऽस्मिन् शक्तिवैशिष्ट्यमपृथग्भावसम्बन्धेन बोध्यम्। तेन शक्तिशक्तिमतोर्नाद्वैतहानिः, धर्मधर्मिणोरभेदात्। सच्चिदा-

---

१. छा. उ. ६।२।१

नन्दानां परशिवधर्माणां पृथग्लक्षणत्वकथनं तु नोपयुज्यते, तेषामपि शक्तिस्वरूपत्वावगमात्।

तच्चेदं लक्षणं भगवतः परशिवस्य स्वरूपलक्षणमित्युच्यते। तटस्थ-लक्षणं तु जगज्जन्मादिकारणत्वम्। तच्च "जन्माद्यस्य यतः"[1] इति सूत्रे भगवता व्यासेन निरूपितम्। तथा "यतो[2] वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिशतेन प्रतिपादितम्। तेन परशिवस्य जगत्कर्तृत्वं पर्य-वस्यति। तच्च परशिवे निमित्तोपादानोभयसम्बन्धेन। तथा च जग-ज्जन्मादिनिष्ठकार्यतानिरूपितनिमित्तोपादानोभयविधकारणत्वस्य शक्ति-विशिष्टपरशिव एव सत्त्वात् तत्र शक्त्यंशे उपादानकारणत्वम्, परशिवांशे निमित्तकारणत्वमित्युभयविधकारणत्वस्य शक्तिविशिष्टपरशिव एव समन्वयात्।

सोऽयं शक्तिविशिष्टो भगवान् परशिवः "सोऽकामयत[3] बहु स्यां प्रजायेयेति", "तदैक्षत बहु स्यां प्रजायेयेति" इत्यादिश्रुतिसिद्धसिसृक्षा-लक्षणविमर्शशक्तिपरिबृंहितं परब्रह्मेति परिगीयते। एवं स्वेच्छान्तरङ्ग-भूतज्ञानशक्तेश्चिच्छक्तित्वं तद्बहिरङ्गभूतक्रियाशक्तेरचिच्छक्तित्वमिति चिदचिद्रूपज्ञानक्रियासमरसीभूतेच्छाशक्तेरेव विमर्शरूपत्वात् तदनुप्रविष्ट-प्रथमसमुद्योगदशायां तदेव परंब्रह्म भाविचेतनाचेतनप्रपञ्चनिष्ठकार्यता-निमित्तकारणत्वोपयोगिसर्वज्ञत्व-सर्वकर्तृत्वादिगुणविशिष्टत्वेन नीलकण्ठ-त्वोमापतित्वत्रिलोचनत्वादिलीलामयमङ्गललक्षणलक्षितं परशिवतत्त्वमिति प्रतिपाद्यते, "उमासहायं[5] परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्॥", [6]"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः॥" इत्यादिश्रुतेः। एवं सकलमङ्गलगुणरत्नरत्नाकरस्य विमर्शशक्ति-विलासविलसितेच्छाशक्ति-ज्ञानशक्ति-क्रियाशक्तिपरिबृंहितस्य परशिवस्य समस्तवेदागमोपनिषच्छास्त्राण्यखिलचराचरप्रपञ्चमूलकारणतां प्रतिपाद-यन्ति। अतस्तादृशपरब्रह्मणः परशिवस्य निमित्तोपादानोभयकारणता-निर्वाहकाऽघटितघटनाशक्तिवैशिष्ट्यं सुरगुरुणाऽप्यनपलपनीयत्वमिति सिद्धम्।

---

१. ब्र. सू. १।१।२. २. तैत्ति. उ. ३।१. ३. तैत्ति. उ. २।६.
४. छा. उ. ६।२।३. ५. कैव. उ. ७. ६. वनदु. उ. १५९.

तत्र स्थूलचिदचिद्रूपशक्तिविशिष्टत्वं जीवात्मनो लक्षणम्। परमात्मन्यतिव्याप्तिवारणाय स्थूलेति शक्तेर्विशेषणम्। स्थूलत्वं च मलत्रयविशिष्टत्वम्; अतस्तस्य शुद्धाशुद्धतत्त्वान्तर्भूतत्वम्। वैशिष्टयं च अपृथग्भावसम्बन्धेन। एतन्मलत्रयरूपशक्तिविशिष्टो जीवः संसारीति निगद्यते। ज्ञानादीनां जीवधर्माणां पृथग्लक्षणत्वकथनं तु नोपयुज्यते। चिच्छक्तेर्ज्ञानशक्तिस्वरूपत्वमचिच्छक्तेः क्रियाशक्तिस्वरूपत्वमित्यवगमात्, ज्ञानादीनामपि शक्तिस्वरूपत्वे बाधकाभावात्। अस्मि, प्रकाशे, नन्दामीति सच्चिदानन्दधर्माणामपि तदन्तर्भूतत्वमव्याहतमेव। वह्नितद्गतविस्फुलिङ्गवद् जीवशिवयोरंशांशिभावविवक्षणेन सच्चिदानन्दस्वरूपस्य परशिवस्य सूक्ष्मावस्थां प्रपन्ना ये ये धर्मास्ते सर्वे शिवांशीभूतजीवात्मनि स्थूलावस्थां प्रपन्नास्तन्निष्ठशक्तिस्वरूपत्वेन प्रकाशन्त इति सर्वमवदातम्।

तच्चेदं लक्षणं जीवस्य स्वरूपलक्षणमित्युच्यते। तटस्थलक्षणं तु सुखदुःखादिमत्त्वम्, अयं सुखी, अयं दुःखीति व्यवहारदर्शनात्। सुखदुःखादीनां "शाखाग्रे चन्द्रः" इत्यादितटस्थलक्षणवत् ताटस्थ्येन जीवलक्षणत्वम्। सुखदुःखादयो हि जीवस्य तत्तत्सामग्रीसमवधानदशायां तत्तच्छरीरादिसम्बन्धेन पर्यवस्यन्ति, सुखदुःखादिनिष्ठोपभोग्यतानिरूपितोपभोक्तृत्वस्य तत्तत्सामग्रीसमवधानदशायां शरीरादिसम्बन्धेन जीव एव पर्यवसानात्। अतः सुखदुःखादिविषयेषु भोज्यत्वं जीवस्य भोक्तृत्वं च सार्वजनीनम्।

एवं परशिवांशोऽपि जीवो जाग्रत्-स्वप्न-सुषुप्तिरूपावस्थात्रयनिबन्धनस्थूल-सूक्ष्म-कारणशरीरविशिष्टस्त्यागाङ्गः, भोगाङ्गः, योगाङ्ग इति व्यपदिश्यते, अवस्थाभेदेन भेदस्वीकारात्। तस्य शरीरं तु सुखदुःखादिभोगायतनम्। तच्च चतुर्विधम्, जरायुजाण्डजस्वेदजोद्भिज्जभेदात्। तत्र जरायुजं मनुष्यपश्वादीनाम्। अण्डजं पक्षिसर्पादीनाम्। स्वेदजं कृमिकीटादीनाम्। उद्भिज्जं च वृक्षलतादीनाम्। जीवात्मनो हि तत्तत्प्रारब्धकर्मतारतम्यवशाद् ईश्वरेच्छानियन्त्रितत्त्वेन भिन्न-भिन्न-शरीराणि संप्राप्य संसारेऽस्मिन्नसारे सुखदुःखोपभोगिनो भूत्वा सततं संसरन्ति, अतो भगवतो नियन्तुः परमेश्वरस्य पतित्वम्। तन्नियुज्यशरीरभोगवतां जीवानां पशुत्वम्। तद्भोगसाधनविषयजालस्य पाशत्वमाचक्षते शिवागमाः। अतः पति-पशु-पाशरूपपदार्थत्रयपर्यायवाचकशिव-जीव-मलरूपपदार्थत्रयप्रतिपादकं

महापाशुपतमतं शिवाद्वैत-मतस्यैवापराभिधानमिति शिवागमानां सुगमः पन्थाः।

न वयं शिवाद्वैतमहापाशुपतमतयोः किञ्चिद् भेदं पश्यामः।

'सतीव रमणे यस्तु शिवे शक्तिं विभावयन्।
तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान्॥
पतिव्रताया यच्छीलं[2] पतिरागात् प्रशस्यते।
तथा शिवानुरागेण सुशीलो भक्त उच्यते॥

इत्यादिसिद्धान्तशिखामणिवचनैर्लिङ्गाङ्गसामरस्यरूपैक्यस्थलस्याव्यवहितपूर्वस्थितशरणस्थलोक्तप्रक्रियानुसारेण परशिवे पतित्वभावनासमासादितान्तर्लिङ्गानुसंधानरूपसमरसीभावस्य जीवस्यैवावगमाद् महापाशुपतप्रक्रियैव शिवाद्वैतप्रक्रियेति सर्वमनवद्यम्।

तत्र उपादानत्वम्, अपृथक्सिद्धधर्मत्वं वा शक्तेर्लक्षणम्। शक्त्यादिभूम्यन्तानां सर्वतत्त्वानां शक्तिस्वरूपत्वादुत्तरोत्तरतत्त्वं प्रति पूर्वपूर्वतत्त्वस्योपादानत्वस्त्रीकाराद् उपादानत्वरूपलक्षणस्य सर्वत्र समन्वयः। न चान्त्यस्य पृथिवीतत्त्वस्य उपादानत्वाभावादव्याप्तिरिति वाच्यम्, तत्रापि अवयवावयविद्रव्याणां विपुलत्वाद् अवयविद्रव्यं प्रत्यवयवद्रव्यस्योपादानत्वस्य निष्प्रत्यूहत्वात्। न चान्त्यावयविनि घटपटादौ तदभावाद् अव्याप्तिस्तदवस्थेति वाच्यम्, तन्निष्ठरूपादिकं प्रति तस्याप्युपादानत्वस्यावर्जनीयत्वात्। ननु रूपादीनामपि शक्तितत्त्वान्तर्भूतत्वात् तेषामुपादानत्वविरहात् कथं सर्वत्र लक्षणसमन्वय इति चेन्न, उपादानत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य विवक्षितत्वात्। साक्षाद्व्याप्यत्वं च तद्व्याप्यत्वे सति तद्व्याप्याव्याप्यत्वम्। तथा च साक्षाद्व्याप्यत्वघटकलक्षणस्य गौरवदोषप्रसक्तिरतो द्वितीयं लक्षणम्। तत्र सूक्ष्मचिदचिद्रूपशक्तेः परशिवापृथक्सिद्धधर्मत्वात् स्थूलचिदचिद्रूपशक्तेर्जीवापृथक्सिद्धधर्मत्वाद् लक्षणसमन्वयः। अपृथक्सिद्धत्वमात्रोपादाने शिवजीवयोरतिप्रसक्तिः, तयोः स्वापृथक्सिद्धत्वस्य स्वतः सिद्धत्वात्। अतो धर्मत्वोक्तिः। शिवजीवयोर्धर्मत्वाभावान्न दोषः। ननु धर्मत्वमेव लक्षणमस्तु, अपृथक्सिद्धदलस्य वैयर्थ्यादिति चेन्न, शिवत्वजीवत्वयोरतिप्रसङ्गवारणाय तत्सार्थक्यात्। न च शिवत्वजीवत्वयोर्लक्ष्यत्वं

१. सि. शि. १३।५, पृष्ठ २०    २. सि. शि. १३।५, पृष्ठ २९

युक्तम्, शिवजीवयोर्लक्षणकथने लक्ष्यतावच्छेदकलक्षणयोरैक्यत्वापत्तेः। तत्र शिवशिवत्वयोर्जीवजीवत्वयोराधाराधेयभावनियामकस्तादात्म्यसम्बन्धः, धर्मधर्मिणोस्तादात्म्यसम्बन्धेनैवाभेदे पर्यवसानात्। अत्र शक्ति-तदपृथक्-सिद्धधर्मत्वयोर्लक्ष्यलक्षण-भावापन्नयोराधाराधेयभावनियामकः स्वरूपसंबन्ध-विशेषः। तत्संबन्धेनैव लक्षितस्य लक्षणसमन्वयसंगतिः। तयोर्भेदस्तु प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोर्भेदेन संगमनीयः।

सेयं शक्तिः स्वभावतश्चेतनाचेतनस्वरूपाऽपि सूक्ष्मस्थूलभेदेन द्विविधा। नित्यानित्यविभेदेन कैश्चिद् द्विविधा क्रियमाणा। तत्रापि नास्माकं विरोधः, कारणरूपायाः सूक्ष्मचिदचिद्रूपशक्तेर्नित्यत्वम्, कार्यरूपायाः स्थूलचिदचिद्रूपशक्तेरनित्यत्वमित्यङ्गीकारात्। शक्तेर्द्रव्यत्वाद्रव्यत्वोभयात्मकत्वान्मतान्तरोक्तद्रव्यगुणकर्मादीनामप्यस्यामेवान्तर्भूतत्वम्। अनयैव दिशा कार्यकारणयोरनन्यत्वमपि तुल्यवित्तिन्यायेन प्रसिध्यति। तथा हि—सविशेषब्रह्मप्रतिपादकेऽस्मिन् शक्तिविशिष्टाद्वैतसिद्धान्ते कार्यकारण-भावापन्नस्य निखिलचराचरप्रपञ्चस्य शक्तिवैशिष्ट्यविशेषेण सर्वं शिव-शक्तिमयमेव विभाति। तथा चोक्तम्—"तस्य[1] भासा सर्वमिदं विभाति" इति, "शिवशक्तिमयं तत्त्वं जगदाहुर्मनीषिणः" इति च। अत्रेदमवधातव्यम्, द्रव्यत्वाद्रव्यत्वरूपेण गुणगुणिरूपेण धर्मधर्मिरूपेण कार्यकारणभावेन च सर्वं जगत् शिवशक्तिसमरसीभूतमिति सर्वपदार्थेषु शक्तितत्त्वस्यानुवृत्तिरिष्यते। परशिवे सूक्ष्मचिदचिद्रूपशक्तिः, जीवात्मनि स्थूलचिदचिद्रूपशक्तिः, आकाशे व्यापनशक्तिः, पवने स्पन्दनशक्तिः, तेजसि दाहोज्ज्वलनादिशक्तिः, सलिले आप्यायनशक्तिः, पृथिव्यां धारणशक्तिः, वृक्षलतादिषु जलाकर्षणादिशक्तिः, वनस्पतिषु रोगनिवारणशक्तिः, सूर्यकान्ते वह्निप्रकटनशक्तिः, चन्द्रकान्ते जलप्रकटनशक्तिरिति क्रमेण सर्वपदार्थेषु येन केन प्रकारेण शक्तिरस्तीत्यापामरपण्डितानामवगतो विषय इति तत्सिध्यर्थं प्रमाणवराकान्वेषणं नापेक्ष्यते। तत्तत्पदार्थस्वभावानुसारेण तत्तच्छक्तिः प्रत्यक्षादिप्रमाणैरवगम्यतेऽनुभूयते च।

३ सेयं चेतनाचेतनसमरसीभूता शक्तिरेकापि ज्ञानक्रियादिभेदेन बहुधा प्रपञ्च्यते, "परास्य[2] शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेः,

---

१. मुण्ड. २।२।१०    २. श्वे. उ. ६।८.

अनादिनिधनाच्छान्तात् शिवात् परमकारणात् ।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश ॥

इत्यागमोक्तेश्च ।

तत्राऽयं विशेषः—परशिवस्य इच्छा-ज्ञान-क्रियादिशक्तीनां नित्यत्वात् "[1]स ऐक्षत बहु स्यां प्रजायेयेति" इत्यादि श्रुत्या स यदिच्छति तत्कर्तुमकर्तुमन्यथाकर्तुं च शक्नोतीति सर्वसामर्थ्यशीलस्य तस्य सर्वकर्तृत्वशक्तौ क्रियाकरणविभागो नापेक्ष्यते । अपेक्ष्यते चास्मदादीनाम्, जीवानामिच्छा-ज्ञान-क्रियादिशक्तीनामनित्यत्वात् । तत्तत्कार्येषु तत्तत्करणसापेक्षतया निर्वाहिकायामस्मदादिकिञ्चित्कर्तृत्वशक्तौ क्रियाकरणविभागः, एवं सर्वदा सर्वावभासकस्य तस्य भगवतः परशिवस्य सर्वज्ञत्वशक्तौ प्रमितिप्रमाणविभागो नापेक्ष्यते । अपेक्ष्यते चास्मदादीनाम्, जीवानां ज्ञान-क्रियादीनामनित्यत्वात् । तत्तत्काले तत्तद्विषयसन्निकृष्टदशायां तत्तद्विषयावभासकतया तत्तत्प्रमाणसापेक्षकत्वेन निर्वाहिकायामस्मदीयकिञ्चिज्ज्ञत्वशक्तौ प्रमितिप्रमाणविभागः । तस्मात् प्रमेयविदो वदन्ति—"[2]प्रमेयसिद्धिः प्रमाणाद्धि" इति । ततोऽस्मदादीनां प्रमेयसिद्ध्यर्थं प्रमितिप्रमाणरूपज्ञानशक्तिसंपत्तिरपेक्ष्यत इति तृतीयप्रकरणे सैव प्रस्तूयते ।

इति श्रीपूवल्लीबृहन्मठीयचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां पदार्थलक्षणपरीक्षाकथनं नाम द्वितीयं प्रकरणम् ॥

१. बृ. उ. १।२।५. २. सां. का. ४.

## तृतीयं प्रकरणम्

प्रागुक्तलक्षणलक्षितस्य जीवात्मनः स्थूलचिदचिद्रूपशक्त्यन्तर्गता चिच्छक्तिरेव ज्ञानशक्तिपर्यायेणोच्यते । अतः शक्तिविशेष एव ज्ञानम्, न तु ज्ञानविशेष एव शक्तिरिति शिवाद्वैतसिद्धान्तस्थितिः ।

तच्च ज्ञानं चतुर्विधम्, अनुभव-स्मृति-संशय-विपर्ययभेदात् । तत्र अवस्थितव्यवहारजनकत्वे सति ज्ञानत्वमनुभवस्य लक्षणम् । संशयेऽति-प्रसक्तिवारणायावस्थितपदम् । कालादृष्टादावतिव्याप्तिवारणाय ज्ञानपदम् ।

अनुभवजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणम् । अनुभवेऽतिव्याप्ति-वारणाय सत्यन्तम् । अनुभवजन्यभावनाख्यसंस्कारे तद्वारणाय विशेष्य-दलम् ।

परस्परविरुद्धकोटिद्वयोपस्थापकत्वे सति ज्ञानत्वं संशयस्य लक्षणम् । अनुभवादावतिप्रसङ्गवारणाय सत्यन्तम् । तादृशोपस्थितिजनकेच्छायां तद्वारणाय ज्ञानपदम् ।

विरुद्धोपस्थितिमात्रजनकत्वे सति ज्ञानत्वं विपर्ययस्य लक्षणम् । इच्छादावतिप्रसक्तिवारणाय विशेष्यदलम् । अनुभवादौ तद्वारणाय सत्यन्तम् । संशयेऽतिव्याप्तिवारणाय मात्रपदम् । उपस्थितिर्नाम प्रवृत्ति-विशेषः । प्रवृत्तौ चिकीर्षादीनां कारणत्वं सर्वसम्मतम् ।

अनुभवो द्विविधः, भ्रमाप्रमाभेदात् । तत्र अयथावस्थितव्यवहारा-जनकत्वे सति ज्ञानत्वं भ्रमाया लक्षणम् । प्रमायामतिव्याप्तिवारणाय अयथेति । कालादृष्टादिषु अतिप्रसक्तिवारणाय ज्ञानपदम् ।

यथावस्थितव्यवहारजनकत्वे सति ज्ञानत्वं प्रमाया लक्षणम् । भ्रमायामतिव्याप्तिवारणाय यथावस्थितेति व्यवहारविशेषणम् । अनवस्थित-व्यवहारजनके संशये तद्वारणायावस्थितपदम् । व्यवहारो नाम हानोपादा-नादिः शब्दप्रयोगश्च, तज्जनकत्वं नाम व्यवहारजननस्वरूपयोग्यत्वं विवक्षितम् । तेन व्यवहारफलोपधानरहिते क्वचित्प्रमाविशेषे नाव्याप्तिः, तत्रापि स्वरूपयोग्यत्वस्याक्षतत्वात् । यथावस्थितव्यवहारजनकत्वं काला-दृष्टादीनामप्यस्तीति तत्रातिप्रसङ्गवारणाय ज्ञानपदम् ।

प्रमितिस्तत्करणत्वं वा प्रमाणस्य लक्षणम् । मतान्तरोक्तप्रमाणलक्षणानामप्यत्रैवान्तर्भूतत्वम् । करणप्रामाण्याश्रयप्रामाण्ययोरुभयोरपि ज्ञानप्रामाण्याधीनसिद्धिकतया तदुभयसिद्ध्यर्थमपि ज्ञानप्रामाण्यमेवात्र निरूपणीयमिति प्रमाया अपि प्रमाणलक्षणलक्ष्यत्वपरिग्रहः ।

यथार्थख्यातिमनुसृत्यैव प्रमितितत्करणयोर्निरूपणं कृतम् । 'अयं सर्पः', 'इदं रजतम्' इत्यादिषु यथार्थख्यातिमङ्गीकृत्यैव सिद्धान्ततत्त्वानुसरणम्, रज्जुसर्पशुक्तिरजतादिज्ञानेषु पञ्चीकरणप्रक्रियानुसारेण रज्जुशुक्त्यादिषु सर्परजताद्यवयवसद्भावेन तत्र सर्परजतादिज्ञानानामपि यथार्थत्वात् । 'नाऽयं सर्पः', 'नेदं रजतम्' इत्यादिबाधस्तु पुरोवर्तिनि रज्जुशुक्त्यादौ सर्परजतादिबह्ववयवाभावविषयको बोद्धव्यः । अथवा सादृश्यज्ञानस्य यथार्थत्वाद् रज्जुसर्पादिज्ञानं यथार्थम्, तज्ज्ञानस्य सादृश्यविषयकत्वात्, सादृश्यं विना तज्ज्ञानाऽसंभवाच्च । तथा निमित्तस्य यथार्थत्वेन नैमित्तिकस्यापि यथार्थत्वाङ्गीकारेण स्वनयनगतपित्तदोषाच्छादितत्वेन शङ्खगतशुक्लिमा न गृह्यते, सुवर्णानुलिप्तशङ्खवत् । तस्मात् पीतः शङ्ख इति ज्ञानमपि यथार्थमेव । एवमन्यदप्यूहनीयम् ।

तदेतदुक्तलक्षणं प्रमाणं त्रिविधं भवति, प्रत्यक्षानुमानशब्दभेदात् । तत्र साक्षात्कारिप्रमितितत्करणत्वम्, ज्ञानकरणज्ञानान्यत्वे सति स्मृतिभिन्नत्वं वा प्रत्यक्षस्य लक्षणम् । साक्षात्वं नाम जातिरूप उपाधिरूपो वा कश्चिद् ज्ञाननिष्ठः स्वभावविशेषः 'अहमिदं साक्षात्करोमि' इति स्वस्वानुभवप्रमाणकः । अनुमित्यादौ अतिव्याप्तिवारणाय सत्यन्तम् । स्मृतावतिप्रसङ्गवारणाय विशेष्यदलम् । तदेतल्लक्षणं जीवेश्वरप्रत्यक्षसाधारणम् । नैयायिकोक्तदिशा प्रत्यक्षलक्षणविवक्षणे इन्द्रियसन्निकर्षाजन्ये ईश्वरीयनित्यप्रत्यक्षे, इन्द्रियाजन्यत्वपक्षमाश्रित्य योगिप्रत्यक्षे चाव्याप्तिः स्यात् ।

प्रत्यक्षं द्विविधम्, नित्यानित्यभेदात् । ईश्वरप्रत्यक्षं नित्यम्, अस्मदादिप्रत्यक्षं त्वनित्यम् । तथा अस्मदादिप्रत्यक्षमपि द्विविधम्, योगिप्रत्यक्षायोगिप्रत्यक्षभेदात् । तदिदमस्मदादिप्रत्यक्षमदृष्टालोकादिसहकृतेन्द्रियजन्यम् । दृष्टसामग्रीविशेषात् प्रतिनियतविषयं श्रोत्र-त्वक्-चक्षुर्जिह्वा-घ्राणरूपासाधारणकरणभेदात् पञ्चविधम् । विषयेन्द्रियसम्बन्धश्च द्रव्येषु संयोगः, द्रव्याश्रितेष्टद्रव्येषु संयुक्ताश्रितत्वम्, न तु नैयायिकोक्तं सन्निकर्षान्तरं ग्राह्यम् ।

तत्र योगधर्मसहकृतमानसज्ञानत्वं योगिप्रत्यक्षस्य लक्षणम् । योगधर्मश्च

आसन-मुद्रा-बन्धनादिसाधनैरन्तर्लिङ्गानुसन्धानरूपो ध्यानयोगविशेषो हठयोगो वा। शिवागमोक्तप्रक्रियानुसारेण अष्टावरणपञ्चाचाररूपक्रिया-सहकृतषट्स्थलज्ञानगम्यो लिङ्गाङ्गसमरसयोगो ध्यानयोग इत्युच्यते, "लिङ्गाङ्गसंगमो योगी ध्यानयोगी स उच्यते" इति स्मृतेः। अयमेव योगो राजयोग इति पर्यायेणोच्यते, हठयोगस्तु यमनियमाद्यष्टाङ्गसाधन-गम्यश्चित्तवृत्तिनिरोधरूप इत्युच्यते।

तदनेन द्विविधेनापि योगधर्मबलेन केषाञ्चिद्योगिनां निश्चलमनः-प्रसारप्रसादेन सूक्ष्मस्थूलनिखिलपदार्थगोचरं ज्ञानं सर्वदा संभवति। केषाञ्चिद्योगिनां मानसचिन्तासहकृतचित्तसंयमनविशेषेण तत्तद्वस्तुविषयकं ज्ञानं तत्तत्संयमनकाले संभवति।

पुनश्च प्रत्यक्षं सामान्यतो द्विविधम्, सविकल्पकनिर्विकल्पकभेदात्। तत्र सप्रत्यवमर्शप्रत्यक्षं सविकल्पकम्, तद्रहितं प्रत्यक्षं निर्विकल्पकम्। विमर्शस्तत्त्वोल्लेखः। द्विविधमपीदं प्रत्यक्षं जात्यादिविशिष्टवस्तुविषयकमेव, अविशिष्टवस्तुग्राहिणो ज्ञानस्य शशशृङ्गायमाणत्वात्। नैयायिकोक्तनिर्वि-कल्पकसाधकानुमानानां बाधितत्वं सोपाधिकत्वं सत्प्रतिपक्षत्वं व्यर्थ-विशेषणत्वं चेति बहुदूषणप्रसक्तेः। अतोऽग्राह्यमेव तत्। वस्तुतः संस्कारो-द्बोधसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम्। केवलचक्षुरादीन्द्रियजन्यं ज्ञानं निर्विकल्पकमिति निष्कृष्टलक्षणं फलितम्।

इति श्रीपूवल्लीबृहन्मठीयचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां प्रत्यक्षप्रमाणकथनं नाम तृतीयं प्रकरणम्॥

———

## चतुर्थं प्रकरणम्

अथ प्रत्यक्षमात्रोपजीवित्वात् प्रत्यक्षानन्तरमनुमानं निरूप्यते। तत्र अनुमित्यसाधारणकारणत्वमनुमानस्य लक्षणम्। प्रत्यक्षादावतिव्याप्तिवारणायानुमितीति। अनुमितिकारणे परामर्शरूपव्यापारेऽतिप्रसङ्गवारणाय असाधारणेति। अनुमित्यसाधारणधर्मेऽनुमितित्वे तद्वारणाय कारणत्वदलम्। तच्च प्रमाणमेव, प्रमितिकरणतावच्छेदकरूपवत्त्वात्। यत् प्रमितिकरणतावच्छेदकरूपवत्, तत्र प्रमाणम्, यथा प्रत्यक्षम्। व्याप्तिज्ञानस्यानुमितिकरणतावच्छेदकव्याप्तिज्ञानत्वरूपधर्मवत्त्वाद् लक्षणसमन्वयः। तच्च परामर्शद्वाराऽनुमितिं जनयतीति परामर्शसहकृतत्वेन कारणत्वं बोध्यम्। परामर्शस्तु व्याप्तिविशिष्टपक्षधर्मताविषयत्वेन कारणं भवतीति तत्कुक्षिनिक्षिप्तव्याप्तिवैशिष्टयज्ञानस्यावश्यमनुमितिहेतुत्वमभ्युपेयमिति व्याप्तिज्ञानस्य प्रमाणत्वम्।

'लिङ्गादत्रामुमर्थं निश्चिनोमि' इति सर्वेषां लोकानां प्रवर्तमानानुभवव्यवहारौ तन्मूलकप्रवृत्ती च अनुमितेः संशयरूपत्वाभावे निश्चयरूपत्वे च प्रमाणम्। अनुमानाप्रामाण्यग्राहकप्रमाणाभावादनुमानस्य प्रामाण्यं सर्वैरङ्गीकृतमित्यनुमानस्य पृथक्प्रामाण्यमवश्यमभ्युपेयम्।

प्रथममनुमाता पक्षे हेतुदर्शनात् पूर्वानुभूतव्याप्तिं स्मृत्वा तत्र साध्यं निश्चिनोति। यथा पर्वते धूमदर्शनाद् महानसादौ पूर्वानुभूतां 'धूमो वह्निव्याप्यः' इति व्याप्तिं स्मृत्वा, ततः 'वह्निव्याप्यधूमवानयं पर्वतः' इति परामर्शद्वारा 'पर्वतो वह्निमान्' इत्याकारकज्ञानं संपादयति। तदेव 'अनुमितिज्ञानम्' इत्युच्यते।

परामर्शश्च पक्षो व्याप्य इति ज्ञानम्, पक्षो व्याप्यवानिति ज्ञानं वा। द्विविधादपि परामर्शात् पक्षः साध्यवान् इत्येवानुमितिर्जायते। कार्यकारणभावस्तु तादात्म्यसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं तादात्म्यसंबन्धेनानुमितिमुत्पादयतीत्येकात्मप्रत्यासत्त्या एक एव। समवायसंबन्धेन तयोः सामानाधिकरण्यस्वीकारो नास्माकं सम्मतः, समवायानभ्युपगमात्। समवायस्य सम्बन्धरूपसमवायकल्पनेऽनवस्थापातात्। सम्बन्धान्तरकल्पने च तस्याप्येकसम्बन्धः कल्पनीय इत्यनवस्थातादवस्थ्याद् गौरवाच्च। तादात्म्यसम्बन्ध एव कार्यकारणभावनियामक इति लाघवम्।

तत्र अनधिकदेशकालवृत्तित्वं व्याप्यस्य लक्षणम्। अन्यूनदेशकालवृत्तित्वं व्यापकस्य लक्षणम्। तथा च साध्यसामानाधिकरण्यं व्याप्यत्वम्, हेतुमन्निष्ठाभावाप्रतियोगित्वं व्यापकत्वमिति फलितोऽर्थः। परिष्कारस्तु

यद्धर्मावच्छिन्नस्य देशकालवृत्तियद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वं तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्ननिरूपितव्याप्यत्वम्। तथा यद्धर्मस्य देशकालवृत्तियद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठाभावप्रतियोगितावच्छेदकत्वं तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नयावन्निरूपितव्यापकत्वमिति। तथाहि—'पर्वतो वह्निमान् धूमात्' इत्यत्र धूमत्वावच्छिन्नस्य धूमस्य तत्कालीनपर्वतवृत्तिवह्नित्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वमस्तीति 'वह्निव्याप्यो धूमः' इत्यवगम्यते। एवं यद्धर्मस्य साध्यतावच्छेदकीभूतवह्नित्वस्य तत्कालीनपर्वतवृत्तिधूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमस्तीति वह्नित्वावच्छिन्नस्य धूमत्वावच्छिन्नयावद्धूमनिरूपितव्यापकत्वात् 'धूमव्यापको वह्निः' इत्यवगम्यते। एतादृशव्याप्यव्यापकभावापन्ननियतसम्बन्ध एव व्याप्तिस्तज्ज्ञानमनुमानमिति निष्कर्षः।

व्याप्यं च निरुपाधिकसम्बन्धविशिष्टमेव ग्राह्यम्। उपाधित्वं च साधनाव्यापकत्वे सति साध्यसमव्याप्यत्वे सति साधनधर्मभिन्नधर्मत्वम्। सोपाधिकहेतुनाऽनुमित्यनुदयेन स न गृह्यते। हेतुश्च व्याप्यं लिङ्गं साधनं चेति पर्यायेणोच्यते। अतः सद्धेतुप्रपञ्चावसरे पञ्चरूपाणि भवन्ति। यथा—पक्षवृत्तित्वम्, सपक्षसत्त्वम्, विपक्षावृत्तित्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। तत्र सिषाधयिषाभावविशिष्टसिद्ध्यभाववान् पक्षः। यथा धूमहेतुना वह्निसाधने पर्वतादिः। तद्वृत्तित्वं च पक्षनिष्ठाधिकरणतानिरूपिताधेयतावत्त्वम्। निश्चितसाध्यवान् सपक्षः। यथा धूमहेतुना निश्चितवह्निमान् महानसादिः। तद्वृत्तित्वं च सपक्षनिष्ठाधिकरणताधेयतावत्त्वम्। निश्चितसाध्याभाववान् विपक्षः। यथा जलह्रदादिः। तदवृत्तित्वं च विपक्षनिष्ठाधिकरणतानिरूपितवृत्तित्वाभावः। पक्षे प्रबलप्रमाणनिश्चितसाध्याभाववत्त्वं बाधः। यथा पर्वतः परभागे वह्निमान्। पर्वतावच्छेदकविशिष्टे पर्वताग्रभागे वह्न्यभाववत्त्वात् तत्साधकहेतोर्बाधितत्वम्। तन्न भवतीत्यबाधितत्वम्। परस्परविरुद्धहेत्वोः परामर्शत्वं सत्प्रतिपक्षत्वम्। यथा 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात्' इत्यत्र 'क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात्' इत्यत्र च उभयहेतोः परामर्शसत्त्वाद् उभयोः सत्प्रतिपक्षत्वम्। तन्न भवति, अनुकूलतर्कादिना न संभवतीति, असत्प्रतिपक्षत्वम्। अनुकूलतर्कस्तु कार्यत्वं यदि कर्तृजन्यत्वव्यभिचारि स्यात् तर्हि किं स्यात्? कर्तृत्वेन कार्यत्वेन कार्यकारणभावो न स्यात्। इत्यनुकूलतर्क-

सत्त्वात् कार्यत्वहेतोः सबलत्वाद् असत्प्रतिपक्षत्वम्। तथा शरीराजन्यत्व-रूपस्य नास्तिकहेतोस्तादृशानुकूलतर्काभावाद् दुर्बलत्वम्, अतस्तस्यैव सत्प्रति-पक्षत्वम्।

अनयैव दिशा व्यभिचारादिदोषविशिष्टानां हेतुवदाभासमानानां दुष्ट-हेतूनामनुमितिप्रतिबन्धकत्वात् (ते) परित्याज्या एव। तेषां लक्षणं तु यद्विषयकत्वेन ज्ञानस्य अनुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं हेत्वा-भासत्वमिति। तथाहि—व्यभिचारादिविषयकत्वेन ज्ञानस्य अनुमितितत्क-रणान्यतरप्रतिबन्धकत्वात् सर्वत्र लक्षणसमन्वयः। अन्यतरत्वप्रवेशे व्याप्ति-ज्ञानादिप्रतिबन्धकानां व्यभिचारादिविषयकज्ञानानां संग्रहः।

पक्षवृत्तित्वादिपञ्चरूपापन्नहेतूनां सद्धेतुत्वव्यपदेशात् तेनैवानुमित्यु-दयेन तत्कारणीभूतव्याप्तिज्ञानस्यापि सद्धेतुप्रयोज्यत्वात् तस्मिन्नेव व्याप्ति-निश्चयं कृत्वा पक्षे साध्यं निश्चिन्वन्ति। तत्र व्याप्तिर्द्विविधा, अन्वयव्याप्ति-व्यतिरेकव्याप्तिभेदात्। तत्र साधनविधौ साध्यविधिरूपेण प्रवर्तमाना व्याप्तिरन्वयव्याप्तिः। यथा—'यो धूमवान् स वह्निमान्' इति। तथा साध्यनिषेधेन साधननिषेधरूपेण प्रवर्तमाना व्याप्तिर्व्यतिरेकव्याप्तिः। यथा 'यो वह्निमान्न भवति स धूमवान्न भवति' इति च। एतदन्यतरव्याप्त्यनु-सन्धानबलेन प्रतिज्ञादिपञ्चावयवात्मकप्रयोगद्वारा सद्धेतौ व्याप्तिनिश्चयं कृत्वा पक्षे साध्यं निश्चिन्वन्ति।

तत्र अनुमानप्रयोगघटकवाक्यत्वमवयवसामान्यलक्षणम्। तत् पञ्च-विधम्, प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनभेदात्। तत्र परानुमितीच्छया साध्यविशिष्टपक्षनिर्देशः प्रतिज्ञा। यथा 'पर्वतो वह्निमान्' इति। ज्ञापकत्व-बोधकपञ्चमीविभक्तिसमभिव्याहृतविपर्ययप्रसङ्गादन्यतमयुक्तनिर्देशवाक्यं हेतुः। यथा 'धूमात्' इति। सम्यग्व्याप्तिनिर्देशपूर्वकदृष्टान्तवचनमुदाहरणम्। यथा 'यो यो धूमवान् स स वह्निमान्, यथा महानसः' इति। हेतूपसंहारक-वाक्यम् उपनयः। यथा 'वह्निव्याप्यधूमवानयं पर्वतः' इति। पक्षे साध्योपसंहारकवाक्यं निगमनम्। यथा 'तथा च पर्वतो वह्निमान्' इति। इत्येवं पञ्चावयवात्मकप्रयोगद्वारा पक्षे साध्यनिश्चयतत्त्वानुसरणं सर्वशास्त्र-कारैरभिमतमिति।

इति श्रीपूवल्लीबृहन्मठीयचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनील-कण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषाया-मनुमानप्रमाणनिरूपणं नाम चतुर्थं प्रकरणम्॥

## पञ्चमं प्रकरणम्

अथ प्रत्यक्षानुमानोभयोपजीवित्वात् तदनन्तरं शाब्दं निरूप्यते। तच्च आकाङ्क्षादिमत्पदप्रयोज्यतत्तत्पदार्थसम्बन्धविषयताकत्वे सति ज्ञानत्वं शाब्दबोधस्य लक्षणम्। शाब्दबोधे पदज्ञानस्य पदार्थोपस्थिति-द्वाराऽसाधारणकारणत्वात् सर्वत्र लक्षणसमन्वयः। अत्र वृत्त्या पदप्रयोज्यत्वं तत्तत्पदार्थेऽन्वयः। वृत्तिश्च शक्तिलक्षणान्यतररूपा। तथा च शक्त्या लक्षणया वा आकाङ्क्षादिमत्पदप्रयोज्यतत्तत्पदार्थोपस्थितिपूर्वकशाब्द-बोधोदयेन न कश्चिद् दोषः।

शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा च 'अस्मात् पदाद् अयमर्थो बोद्धव्यः' इतीश्वरेच्छारूपा। तज्ज्ञानस्यैव शाब्दबोधे उपयोगः। अन्यथा पूर्वं शक्तिज्ञानाभावे पदज्ञानासंभवेन पदार्थस्मरणाभावात् शाब्द-बोधाऽनुपपत्तेः। शक्तिज्ञानं तु व्याकरणोपमानकोशाप्तवाक्यादिभिर्जनितं सत् शाब्दबोधमुत्पादयतीति तस्य व्याकरणादिसहकृतत्वमवश्यमभ्युपेयम्। अत आप्तोक्तवाक्यजन्यत्वम् अनाप्तानुक्तवाक्यजन्यत्वं वा तल्लक्षणं न कृतम्। तेनाप्तोक्तत्वाग्रहदशायां व्याकरणादिनावधारितशक्तिज्ञानात् शाब्दबोधानु-पपत्तेः। द्वितीयलक्षणे नञ्द्वयघटितत्वेन गौरवापत्तेश्च। आप्तभिन्नोऽनाप्त-इति प्रथमम् आप्तोक्तत्वस्य हेतुत्वं स्वीकृत्यैव अनाप्तोक्तत्वस्य निषेधाव-गमात्। आपाततोऽस्मल्लक्षणविवक्षणावश्यकत्वेन घट्टकुटीप्रभातवृत्तान्त-प्रसङ्गः स्यात्।

शाब्दबोधे पदजन्यपदार्थोपस्थितिद्वारा पदज्ञानस्य कारणत्व-संभवस्यावर्जनीयत्वात् तस्यैव शाब्दबोधे प्रमाणत्वम्, प्रमितिकरण-तावच्छेदकरूपत्वात्। तत्र पदशब्दवाच्यत्वप्रकारकाभियुक्तप्रसिद्ध-विषयत्वम्, वृत्त्या पदार्थोपस्थितिजनकत्वं वा पदस्य लक्षणम्। तथा आकाङ्क्षादिसहकृतसमभिव्याहृतपदसंघातविशेषत्वं वाक्यस्य लक्षणम्, आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्यज्ञानानां वाक्यार्थबोधे सहकारित्वात्। तत्र येन पदेन विना यत्पदस्य अन्वयानुभावकत्वाभावः, तेन पदेन सह तस्याकाङ्क्षा। क्रियापदं विना कारकपदं नान्वयबोधमुत्पादयतीति तेन-

तस्याकाङ्क्षा। 'गौरश्वः पुरुषो हस्ती' इत्यादौ आकाङ्क्षादिविरहान्न शाब्दबोधः। एवमेकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः। तज्ज्ञानाभावात् 'वह्निना सिञ्चति' इत्यादौ न शाब्दबोधः। शाब्दबोधात् पूर्वं तत्तत्पदार्थस्मरणे सति क्वचित् संशयात्मकस्य क्वचिन्निश्चयात्मकस्यापि योग्यताया ज्ञानसंभवस्यावर्जनीयत्वात्। यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोः पदयोरव्यवधानेनोपस्थितिरासत्तिरित्युच्यते। परस्पराव्यवहितत्वेन पदानां सान्निध्यमेव आसत्तिरिति तदर्थः। तेन पूर्वाह्णे 'गाम्' इत्युच्चार्य सायाह्ने 'आनय' इत्युच्चारणे क्रियमाणेऽत्यन्तव्यवहितकालोच्चारणविषयीभूतपदयोः सन्निहितत्वाभावान्न शाब्दबोधः। अतः "पदप्रतिपन्नानामेवार्थानां परस्परान्वयो न पदाप्रतिपन्नानाम्" इति नियमः सार्वत्रिकः सिद्धो भवति। एतदभिप्रेत्यैव "नहि शाब्दमशाब्देनान्वेति" इति न्यायविदो वृद्धाः समुपदिशन्ति। वक्तुरिच्छैव तात्पर्यम्। तात्पर्यज्ञानस्य शाब्दबोधे कारणत्वानङ्गीकारे 'सैन्धवमानय' इत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य (च) बोध इति न स्यात्। इत्थं च वेदागमस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम्, प्राक्सृष्टेरध्यापकाभावात्। एवं शुकादिवाक्येष्वपीश्वरीयतात्पर्यज्ञानस्य कारणत्वमिष्यते, तेषु ईश्वरसंकेतेन सर्वव्यवहारसंभवात्।

वाक्यं द्विविधम्, पौरुषेयापौरुषेयभेदात्। तत्र स्वतन्त्रोच्चारणविषयत्वे सति वाक्यत्वं पौरुषेयस्य लक्षणम्। पूर्वपूर्वोच्चारणसापेक्षोच्चारणविषयत्वे सति वाक्यत्वमपौरुषेयस्य लक्षणम्। तत्र मन्वादिमहर्षिभिः कालिदासादिकविभिश्च प्रग्रथितं स्मृतिरूपं काव्यादिरूपं च वाक्यजातं पौरुषेयम्। तथा चतुर्वेदरूपम्, अष्टाविंशतिदिव्यागमरूपं च वाक्यजातमपौरुषेयम्। न वयं वेदागमयोः परस्परभेदं पश्यामः, सर्वविद्यानिवासस्य स्वतन्त्रस्य भगवतः परशिवस्य निःश्वासरूपाणां वेदानां स्पष्टोच्चारणरूपाणां दिव्यागमानां च परस्पराभेदस्यैव पर्यवसानात्। अतो भगवान् वेदराशिः निगमागमस्नाश्रुयतीति पर्यायवाचकशब्दैः प्रयुज्यते।

पदं चतुर्विधम्, योग-रूढ-योगरूढ-लक्षकभेदात्। तथाहि—यत्पदाद् अवयवार्थ एव बुध्यते तद् यौगिकम्, यथा पाचकादिपदम्। यत्पदाद् अवयवशक्तिनैरपेक्ष्यात् समुदायशक्तिमात्रेणार्थबोधस्तद्रूढम्, यथा गोमण्डलादिपदम्। यत्पदाद् अवयवशक्तिसहितसमुदायशक्त्या अर्थबोध-

स्तद्योगरूढम् । यथा पङ्कजादिपदम् । अनयैवावयवशक्त्या पङ्कजनिकर्तृत्वरूपार्थस्य समुदायशक्त्या च पद्मत्वेन रूपेण पद्मरूपार्थस्य बोधो भवति । वस्तुतः सन्निहितत्वेन समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवतीति योगरूढ इत्युच्यते । एवं यादृशानुपूर्व्यवच्छिन्नं पदं यादृशार्थनिरूपितशक्तिशून्यत्वे सति यादृशार्थसम्बन्धवन्निरूपितशक्तिमत् तादृशानुपूर्व्यवच्छिन्नं तत्पदं तादृशार्थे लक्षकम् । यथा—"गंगायां घोषः" इत्यत्र गंगापदम् । तत्र गंगापदं तीरादावसंकेतितं तत्सम्बन्धिनीरादिशक्तत्वेन गृहीतमेव तीराद्यन्वयं बोधयतीति तत् तत्र लक्षकम् ।

यत्र वाच्यार्थानुपपत्तिस्तत्र लक्षणा । वाच्यार्थोपपत्तयेऽन्वयोपपत्तेस्तात्पर्योपपत्तेश्च पूर्वमावश्यकत्वात्तदनुपपत्तौ वाच्यार्थानुपपत्तिरिति लक्षणास्वीकारः । यथा "गंगायां घोषः" इत्यत्रान्वयानुपपत्तिः, "विषं भुंक्ष्व" इत्यत्र च तात्पर्यानुपपत्तिः, अतो वाच्यार्थानुपपत्तौ लक्षणा स्वीक्रियते ।

तत्र अभिधेयाविनाभूतप्रवृत्तिर्लक्षणा । सा च त्रिधा, जहल्लक्षणा–अजहल्लक्षणा–जहदजहल्लक्षणा चेति भेदात् । वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणा । यथा "गङ्गायां घोषः" इत्यत्र गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाच्यार्थस्य विरुद्धत्वाद् वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे तीरे लक्षणा । तथा च जहल्लक्षणया "गङ्गातीरे घोषः" इति शाब्दबोधः ।

वाच्यार्थापरित्यागेन तत्सम्बन्धिनि वृत्तिरजहल्लक्षणा । यथा "शोणो धावति" इत्यत्र शोणगुणगमनलक्षणस्य वाच्यार्थस्य विरुद्धत्वेऽपि तदपरित्यागेन तदाश्रयाश्वादिलक्षणया अर्थबोधाद् अजहल्लक्षणा । तथा च "शोणगुणगमनवानश्वो धावति" इति शाब्दबोधः ।

वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा । यथा "तत्त्वमसि" इति वाक्यं तदर्थो वा सूक्ष्मस्थूलप्रपञ्चाकारशक्तिविशिष्टचैतन्यैकत्वलक्षणस्य वाच्यार्थांशे विरोधाद् विरुद्धसूक्ष्मस्थूलांशं परित्याज्याविरुद्धनामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यमात्रं लक्षयतीति तत्र जहदजहल्लक्षणा स्वीक्रियते । तथा च–"तत्त्वमसि" इत्यत्र तत्पदेन सूक्ष्मचिदचिद्रूपशक्तिविशिष्टो लिङ्गरूपः परशिव उच्यते । त्वंपदेन स्थूलचिदचि-

द्रूपशक्तिविशिष्टोऽङ्गरूपो जीव उच्यते। असिपदेन तयोरैक्यमुच्यते। इदं तत्त्वमसीति महावाक्यं शिवजीवयोर्विरुद्धधर्मविशिष्टयोः साक्षादैक्यप्रतिपादकत्वाभावेऽपि लक्षणया सम्बन्धत्रयेणैकार्थं प्रतिपादयति। तत्र विरुद्धसूक्ष्मस्थूलांशं परित्यज्याविरुद्धनामरूपविभागानर्हचिदचिद्रूपशक्तिविशिष्टयोः शिवजीवयोरैक्यं जहदजहल्लक्षणयाऽवगन्तव्यम्। सम्बन्धत्रयं च पदयोः सामानाधिकरण्यम्, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मतद्धर्मयोर्लक्ष्यलक्षणभावश्चेति। तत्र पदयोः सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकस्मिन्नर्थे वृत्तिः। तच्च "सोऽयं देवदत्तः" इत्यस्मिन् वाक्ये तत्कालतद्देशवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम्। एतत्कालैतद्देशवैशिष्ट्यम् अयंपदप्रवृत्तिनिमित्तम्। तथा च भिन्नप्रवृत्तिनिमित्तयोः सोऽयं पदयोरेकस्मिन् देवदत्तपिण्डे तात्पर्यसम्बन्धः। तद्वत् तत्त्वमसीति महावाक्येऽपि सूक्ष्मचिदचिद्रूपशक्तिवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम्। स्थूलचिदचिद्रूपशक्तिवैशिष्ट्यं त्वंपदप्रवृत्तिनिमित्तम्। तथा च भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वंपदयोरेकस्मिन् नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टे शुद्धचैतन्ये तात्पर्यसम्बन्धः सामानाधिकरण्यम्। प्रवृत्तिनिमित्तं च शक्यतावच्छेदकमित्यर्थः।

पदार्थयोर्व्यावर्तकव्यावर्त्यभावसम्बन्धो विशेषणविशेष्यभावसम्बन्धः। तत्र व्यावर्तकं विशेषणम्, व्यवच्छेदकमिति यावत्। व्यावर्त्यं विशेष्यम्, व्यवच्छेद्यमिति भावः। तयोर्भावो विशेषणविशेष्यभावः। स एव सम्बन्धः, सम्बन्धवदुभयनिरूपणीयत्वात्। स च "सोऽयं देवदत्तः" इत्यत्र अयंपदवाच्यः, सोऽसावेतत्कालैतद्देशविशिष्टो देवदत्तपिण्डो अयं स इति तच्छब्दवाच्यात् तत्कालतद्देशविशिष्टाद् देवदत्तपिण्डाद् भिन्नो नेति यदा प्रतीयते, तदा तच्छब्दार्थस्याऽयंपदवाच्यार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, अयं पदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। तथा स इति तत्पदवाच्यस्तत्कालतद्देशविशिष्टो देवदत्तपिण्डः सोऽयमित्ययंपदवाच्यात् एतत्कालैतद्देशविशिष्टादस्माद् देवदत्तपिण्डाद् भिन्नो नेति यदा प्रतीयते, तदायंशब्दवाच्यस्य तत्पदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, तत्पदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। तथा च "अयमेव सः", "स एवायम्" इत्यन्योन्यभेदव्यावर्तकतया सोऽयंपदार्थयोः परस्परं विशेषणविशेष्यभावः। तद्वदत्रापि तत्त्वमसीति महावाक्ये यत् त्वंपदवाच्यं स्थूलचिदचिद्रूपशक्तिविशिष्टं चैतन्यम्, तद् तत्पदवाच्यात् सूक्ष्मचिदचिद्रूपशक्तिविशिष्टचैतन्याद् भिन्नं नेति यदा प्रतीयते, तदा तत्पदार्थस्य त्वंपदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्। त्वं

पदार्थस्य व्यावर्त्यत्वाद् विशेष्यत्वम्। तथा तत्पदवाच्यं यत् सूक्ष्मचिदचिद्रूपशक्तिविशिष्टं चैतन्यं तत् त्वंपदवाच्यात् स्थूलचिदचिद्रूपशक्तिविशिष्टचैतन्याद् भिन्नं नेति यदा प्रतीयते, तदा त्वंपदार्थस्य तत्पदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, तत्पदार्थस्य व्यावर्त्यत्वाद् विशेष्यत्वम्। तथा च "त्वं तदसि", "तत्त्वमसि" इति तत्त्वंपदार्थयोः परस्परभेदव्यावर्तकतया विशेषणविशेष्यभावसम्बन्धोऽवगन्तव्यः।

लक्ष्यलक्षणभावसम्बन्धस्तु प्रत्यगात्मतद्गतधर्मयोर्लक्ष्यलक्षणभावसम्बन्धः। असाधारणधर्मप्रतिपादकं वाक्यं लक्षणवाक्यम्, तत्प्रतिपाद्यमवशिष्टं लक्ष्यम्। तथा च "सोऽयं देवदत्तः" इत्यस्मिन् वाक्ये सोऽयंपदयोस्तदर्थयोर्वा विरुद्धतत्कालतद्देशविशिष्टत्वैतत्कालैतद्देशविशिष्टत्वयोः परित्यागेनाविरुद्धदेवदत्तत्वविशिष्टदेवदत्तपिण्डेन सह देवदत्तत्वविशिष्टदेवदत्तवाचकशब्दस्य लक्ष्यलक्षणभावसम्बन्धः। तद्वत् तत्त्वमसीति महावाक्ये तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धसूक्ष्मस्थूलचिदचिद्रूपशक्तिविशिष्टत्वपरित्यागेन तत्-त्वंपदाभ्यां लक्ष्याविरुद्धनामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टचैतन्येन सह तत्त्वंपदयोर्लक्ष्यलक्षणभावसम्बन्धः। इयमेव भागलक्षणेत्युच्यते। तत्र तत्त्वंपदयोस्तदर्थयोश्च त्यक्तविरुद्धांशयोर्लक्षणत्वम्, अखण्डपरशिवचैतन्यस्य लक्ष्यत्वमिति मन्तव्यम्। तथा च चिद्घनाचार्यैरुक्तम्—

एकात्मकत्वाज्जहती न संभवेत् तथाऽजहल्लक्षणता विरोधतः।
सोऽयं पदार्थाविव भागलक्षणा युज्येत तत्त्वंपदयोरदोषतः॥ इति।

अमुमेवार्थं शिवागमा अप्यामनन्ति—

तत्पदेनोच्यते लिङ्गं त्वंपदेनाङ्गमीरितम्।
अनयोरैक्यभावोऽयं सम्बन्धोऽसिपदेन च॥
लिङ्गाङ्गपदवाच्यार्थं हित्वा सम्यग्धिया पुनः।
लक्ष्यार्थं लक्षयित्वा तं सोऽहमेवेति चिन्तयेत्॥ इति।[1]

अत्रेदं बोध्यम्—लिङ्गाङ्गसामरस्यरूपतत्त्वमस्यादिमहावाक्यार्थविचारे न केवलं वाच्यार्थपरित्यागपूर्वकलक्ष्यार्थमादाय लिङ्गाङ्गयोरैक्यप्रतिपत्तिः,

---

१. शि. द. पृ. ५६

किन्तु वाच्यार्थमादायापि तयोरैक्यप्रतिपत्तिर्निष्प्रत्यूहा। तथाहि--अङ्ग-पदस्य रूढिशक्त्या शरीरवाचित्वेन "यस्य चात्मा शरीरम्", "यस्य चाव्यक्तं शरीरम्" इत्याद्यन्तर्यामिब्राह्मणे पृथिव्यादिजीवात्मपर्यन्तस्य सकलचेतनाचेतनात्मकप्रपञ्चस्य परशिवशरीरत्वबोधनात् "अहं पुरुषः", "अहं देवः", "गौरोऽहम्", "स्थूलोऽहम्" इत्यादिवद् अहमादिसर्वशब्दानामन्तर्यामिपरशिवे शक्तिः सिद्ध्यतीति तस्य सर्वशब्दवाच्यत्वं स्वीकृत्यैव सिद्धान्तसंगतिरिति। अतः "सर्वं खल्विदं ब्रह्म[1]", "सर्वो वै रुद्रः[2]" इत्यादिश्रुतयः सर्वपदवाच्यत्वं परशिवस्य प्रतिपादयन्ति। परशिवस्य सर्वशरीरकत्वात् सर्वाभिमानित्वाच्च सर्वपदवाच्यत्वे न कोऽपि विवादः।

इति श्रीपूवल्लीबृहन्मठीयचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां शब्दप्रमाणनिरूपणं नाम पञ्चमं प्रकरणम्॥

---

१. छा. उ. ३।१४।१ २. महाना. २२ अनुवाक.

# अथ षष्ठं प्रकरणम्

प्रागुक्तप्रकरणेषु प्रमेयसिद्ध्यर्थं प्रमाणत्रयं निरूपितम्। इदानीं परशिवापृथक्सिद्धधर्मरूपापन्नायाः सूक्ष्मचिदचिद्रूपशक्तेः परिणामभेदमाश्रित्य कार्यकारणभावो निरूप्यते।

तत्र सूक्ष्मचिदचिद्रूपशक्तेः कारणत्वम्, स्थूलचिदचिद्रूपशक्तेः कार्यत्वमिति शिवाद्वैतसिद्धान्तरीतिः। अतः सूक्ष्मस्थूलशक्तिविशिष्टत्वेन शिवजीवयोर्विभागोऽपि संगच्छते।

कारणं द्विविधम्, उपादाननिमित्तभेदात्। तत्र कार्यावस्थाश्रयत्वे सति कारणत्वमुपादानत्वम्। निमित्तकारणेऽतिव्याप्तिवारणाय सत्यन्तम्। कार्येऽतिव्याप्तिवारणाय विशेष्यदलम्। आश्रयत्वं च अपृथग्भावसम्बन्धेन।

उपादानाश्रयत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम्। उपादानेऽतिप्रसङ्गवारणाय सत्यन्तम्। उपादानाश्रयीभूते भूतलादौ तद्वारणाय कारणत्वम्। न च भूतलादीनामपि तत्कारणत्वं सम्भवति, तेषां कार्यनियतपूर्ववृत्तित्वेऽपि कार्योत्पत्त्यावश्यकत्वाभावात् कारणत्वाऽसंभवात्। यद्विना कार्योत्पत्तिर्न संभवति, तस्य तदुत्पत्त्यावश्यकत्वं सिद्धम्। तस्य च भूतलादावभावान्न दोषः। उत्पत्त्यावश्यकाव्यवहितपूर्ववृत्तिवस्तूनामेव कारणत्वम्। अन्येषां तु अन्यथाभावित्वम्। एतत्कारणद्वयं प्रत्येकं द्विविधम्, नित्यानित्यभेदात्। शुद्धतत्त्वान्तर्गतं नित्यम्। अशुद्धतत्त्वान्तर्गतमनित्यम्।

तत्र उत्पत्तिमत्त्वं विनाशित्वं वा कार्यस्य लक्षणम्। स्थित एवोपादाने तद्भिन्नव्यवहारयोग्यत्वमुत्पत्तिः, परिणामो वा। कार्यरूपपरित्यागेन कारणरूपापत्तिर्विनाशः।

अस्मत्सिद्धान्ते परब्रह्मणः शिवशक्तिवैशिष्ट्याङ्गीकारेण तन्निष्ठासाधारणरूपायाः शक्तेरेव परिणामित्वम्, न तु परशिवब्रह्मणः। अतः शक्त्यादिपृथिवीपर्यन्तस्य सकलतत्त्वसमुदायस्य शक्तिस्वरूपत्वं प्रतिपादयन् भगवानागमोऽप्याह—

"शक्तिरेव जगत्सर्वं शक्तिमांस्तु महेश्वरः" इति।

तथा भगवती श्रुतिरप्याह—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥ इति।
(श्वेता. उ. ४।१०)

अत्र नित्ययोगे खलु मायिनमित्यत्र मायाशब्दादिनिप्रत्ययः। तथा च शक्तेर्ब्रह्मापृथक्सिद्ध्यैव तदपृथक्सिद्धायाः कार्यरूपाया अपि ब्रह्मापृथक्सिद्धिसम्भवात्। तथा च सिद्धागमे[1]—

मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी॥ इति।

सिद्धान्तशिखामणावपि—

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा॥
अन्तःकरणरूपेण जगदङ्कुररूपतः।
यस्मिन् विभाति चिच्छक्तिर्ब्रह्मभूतः स उच्यते॥ इति।

एतत्सर्वं शिवाद्वैतदर्पणे विस्तरेण प्रतिपादितमिति तद्रीतिमनुसृत्यैवात्र निरूप्यतेऽस्माभिः। "सदेव[3] सौम्येदमग्र आसीत्" इत्यादिश्रुतयस्तु—

शक्तिः शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ।
तौ ब्रह्म सामरस्येन समस्तजगदात्मकौ॥

इत्यादिना निमित्तोपादानोभयकारणं प्रपञ्चविलक्षणं शक्तिविशिष्टं षट्स्थलात्मकं घनलिङ्गं सच्छब्देन प्रतिपादयन्ति। अतो जगदुभयकारणत्वं शक्त्यविनाभावापन्ने परशिवे समन्वितमित्यत्र न कोऽपि विवादावकाशः।

---

१. सि. शि. २०।४; पृष्ठ २०२, २. सि. शि. २०।३; पृष्ठ २०१.
३. छा. उ. ६।२।१.

मायावादिनस्तु ब्रह्मणो विवर्तमानतया मायायाः परिणममानतयोपादानत्वमिति वदन्ति। तद् अविज्ञाततत्त्वार्थपथमधिरोहति, सद्रूपापन्ने विवर्ताधिष्ठानभूते वस्तुन्यसद्रूपापन्नप्रपञ्चोपादानत्वकल्पनानौचित्यात्।

"नासतो विद्यते भावो नाभावो विद्यते सतः" (भ. गी. २।१६) इत्यादिप्रमाणशतेन सदसतोरुपादानोपादेयभावस्य निषेधावगमात्। नहि सद्रूपापन्नायां विवर्ताधिष्ठानभूतायां शुक्तौ असद्रूपापन्नरजतोपादानत्वमुपपादयितुं युक्तम्, अनुभवविरोधात्, असमानाधिकरणयोः शुक्तिरजतयोः कार्यकारणभावासंभवात्, कार्यकारणयोः सामानाधिकरण्यस्य सर्वशास्त्रसिद्धत्वात्। तदनङ्गीकारे घटं प्रति तन्तोः, पटं प्रति कपालस्य कार्यकारणभावोऽवर्जनीयः स्यात्। अतः कार्यकारणयोः सामानाधिकरण्यमवश्यमभ्युपेयम्। तथा सति सदसतोः सामानाधिकरण्याभावात् कथं कार्यकारणभावः। अस्मत्सिद्धान्ते समस्तोपादेयस्य जगतः सदात्मकतया तस्योपादानस्यापि सदात्मकत्वात् सदात्मकशक्तिविशिष्टपरशिवस्यैवोपादानत्वम्। "[1]असद्वा इदमग्र आसीत्, ततो वै सदजायत" इत्यादिश्रुतयस्तु स्थूलचिदचिदात्मकशक्तिस्वरूपस्य सर्वप्रपञ्चस्य सच्चिदानन्दस्वरूपे घनलिङ्गाभिधे परशिवे ग्रीष्मकालीनधरित्रीविलीनतृणादिबीजवत् सूक्ष्मचिदचित्प्रपञ्चाकारशक्तिरूपेणावस्थानं प्रतिपादयन्ति। तत्र स्थूलशक्तेः कार्यात्मना निषेधो न तावत्कारणात्मना, अन्यथा सत्कार्योच्छेदप्रसङ्गात्। कार्यस्य कारणात्मनाऽवस्थितिरेव सर्वप्रपञ्चस्य सत्कार्यवादोपपत्तौ बीजम्, तत एव परिणामवादस्य सुवचत्वात्।

नैय्यायिकादयस्तु—ननु परमात्मा केवलं निमित्तभूतः स्वव्यतिरिक्तपरमाणुप्रकृत्यादिना सर्वप्रपञ्चं सृजतीति कथमस्य विश्वोपादानत्वं परप्रकृतिरूपत्वेन सम्भवति? नहि घटं निर्मिमाणः कुलालः स्वयमेव मृत्पिण्डीभूय घटं करोति, असम्भवात्। ततो निमित्तभूतस्य तस्योपादानत्वकल्पनाऽसम्भवादित्याहुः। तदपि अविचाररमणीयम्। तथाहि—"विश्वाधिपो[2] रुद्रो महर्षिः" इत्यादिना यथा विश्वाधिपत्वेन परमात्मनो निमित्तत्वमवगम्यते, तथा "सर्वं खल्विदं [3]ब्रह्म", "सर्वो वै रुद्रः[4]"

१. तैत्ति. उ. २।७. २. श्वे. उ. ३।४.
३. छा. उ. ३।१४।१, ४. महाना. उ. २२ अनुवाक.

इत्यादिना परप्रकृतिरूपत्वेन सर्वोपादानत्वमपि श्रूयते । शतरुद्रीये-- "नमो[1] हिरण्यबाहवे" इत्यारभ्य "कुलुञ्चानां[2] पतये नमः" इत्यन्तेन विश्वाधिपतित्वेन निमित्तत्वम्, ततश्च "[3]नमः पर्ण्याय च पर्णशद्याय च" इत्यन्तेन जगदाकारत्वेनोपादानत्वमप्यवगम्यते ।

किञ्च "[4]यथोर्णनाभिः सृजते गृह्णते च" इति मुण्डकश्रुत्या यथा ऊर्णनाभिः स्वयं निमित्तोपादानत्वमापन्नः स्वशरीरात् तन्तुजालमुद्गमते गृह्णाति च, तथा परशिवोऽपि निमित्तोपादानतामापन्नः स्वस्मादविनाभूतपराशक्त्या सर्वप्रपञ्चं सृजति संहरति च । "सोऽ[5]कामयत बहु स्यां प्रजायेय" इति परशिवस्य बहुप्रजाजनकत्वमुपादानत्वेन यथा श्रूयते, तथा "[6]अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इत्यादिना परशिवाविनाभावमापन्नायाः पराशक्तेरपि बहुप्रजाजनकत्वमुपादानत्वेन श्रूयते। एतद्वाक्यद्वये बहुशब्दप्रजाशब्दयोः समानविषयार्थकत्वबोधकत्वेन "बहु स्यां", "सरूपाः" इत्यादिशब्दस्वारस्यात् स्वात्मकत्वस्वसमानरूपत्वमापन्नस्य सर्वप्रपञ्चस्य शिवशक्तिस्वरूपत्वावगमेन च पराशक्त्यविनाभावमापन्नपरशिवस्यैव सर्वोपादानत्वसिद्धेर्निष्प्रत्यूहत्वात् । तथा च--

"शिवशक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः ।"

इत्यादिप्रमाणशतेन शक्तिविशिष्टपरशिवस्यैवोभयविधकारणत्वं सिद्धमिति, परमाण्वादीनामुपादानत्वे बहुदोषप्रसक्तेः, अतस्तन्न ग्राह्यम् ।

एवं छान्दोग्ये एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "[7]यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्यादिना तत्रोपादानोपादेयभावापन्नमृत्पिण्डघटादिदृष्टान्तोपपादनसामर्थ्याद् ब्रह्मप्रपञ्चयोरप्युपादानोपादेयभावो विवक्षित इत्यवगमात्, सम्भवतश्च दृष्टान्तसाम्यस्य त्यागायोगात् । उदाहृतछान्दोग्यश्रुतेस्तावद् ब्रह्मणः परशिवस्य सर्वोपादानत्वे

१. श्रीरुद्र २ अनुवाक.
२. श्रीरुद्र. ३ अनुवाक.
३. श्रीरुद्र. ९ अनुवाक.
४. मुण्ड. १।१।७.
५. तैत्ति. उ. २।६.
६. श्वे. उ. ४।५.
७. छा. उ. ६।१।४.

प्रमाणत्वमव्याहतमेव। तत्र हि—"[1]सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यत्र सत्पदं सूक्ष्मचिदचिद्रूपापन्नशक्तिविशिष्टशिवपरम्, अन्यथा तदतिरिक्तजीववर्गादिसत्त्वेनावधारणविरोधात्। तज्ज्ञाने च तत्कार्यमपि सर्वं विषयो भवति, कार्यद्रव्यस्य कारणानन्यत्वात्। तद्गतस्थौल्यावस्थापरं न विषयः, अतस्तेनाकारेणाश्रुतत्वादिश्रवणमुपपद्यते। दृष्टान्तोऽप्युपादानज्ञानेनोपादेयानां ज्ञातत्वविषय एव। एवं च "[2]सर्वं मृण्मयं विज्ञातं स्यात्" इत्यत्र सर्वशब्दः "[3]एकेन मृत्पिण्डेन" इति प्रागृहीतैकमृत्कूटविकारघटशरावादिसामस्त्यपरो युक्तः। एवं दृष्टान्तस्य मुख्यत्वव्यवस्थितौ तद्गुणत्वमुखेन आपतद्दार्ष्टान्तिकस्य गौणत्वं प्रत्याख्यातं भवति। दार्ष्टान्तिके सर्वविज्ञानं प्राधान्यविहीनतया गौणम्। दृष्टान्ते तु तत्प्रकारकैक्यविषयतया इति तयोर्वैरूप्यं च परिहृतं भवति।

"[4]सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिरपि न जीवविषया, "तज्जलानिति" सर्वस्य प्रपञ्चस्य ब्रह्माधीनजन्म-स्थिति-लयत्वोक्तेर्जीवेऽनन्वयात्। जीवस्तु "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥" (कठो० ५।७) इत्यादिश्रुतिमवलम्ब्य पर्यायतः सर्वशरीरग्रहणरूपसर्वात्मभावः कल्पनीय इति न तस्य वेदतः प्रसिद्धिरस्ति, नापि लोकतः। यद्यपि "यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किं तद्ब्रह्म वेद्यस्मात् सत्सर्वमभवत्" इत्यादिश्रुतिषु जीवस्यापि मुक्तौ सार्वात्म्यं प्रसिद्धतरम्, तथापि सिद्धसाध्ययोः सार्वात्म्ययोः सिद्धस्यैवात्र ग्रहणं युक्तम्, सापेक्षनिरपेक्षन्यायात्। तस्मात् सूक्ष्मचिदचिद्रूपशक्तिविशिष्टशिवस्य कारणत्वम्, स्थूलचिदचिद्रूपशक्तिविशिटस्य तस्य कार्यत्वमिति सर्वश्रुतिसमन्वयबलेन शिवाद्वैतसिद्धान्तोक्तप्रक्रियानुसारेण कार्यकारणभावो विवेचनीय इति सर्वं समञ्जसम्।

इति शिवाद्वैतपरिभाषायां कार्यकारणभावनिरूपणं नाम षष्ठं प्रकरणम् ॥



---

१. छा. उ. ६।२।१.
२. छा. उ. ६।१।४
३. छा. उ. ६।१।४.
४. छा. उ. ३।१४।१.

## अथ सप्तमं प्रकरणम्

प्रागुक्तप्रकरणे प्रपञ्चपरशिवयोः सामान्यतः कार्यकारणभावो निरूपितः। तत्र एकस्या एव पराशक्तेर्नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपायाः परिणामभेदमाश्रित्य कार्यकारणयोरनन्यत्वं प्रदर्शितम्। इदानीं तदेव विशेषतः षट्त्रिंशत्तत्त्वरूपाणां शिवशक्त्यादिभूम्यन्तानां विवेचनं क्रियते।

प्राक्सृष्टेः परब्रह्मणः परशिवस्य पराशक्तेश्च सूक्ष्म-स्थूल-चिदचिद्रूपादिनामरूपविभागानर्हदशायामागमा इदमामनन्ति। तथाहि श्वेताश्वतरे—

**यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः।**
**तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी॥[1]** इति।

अस्यायमर्थः—यस्मिन् काले चन्द्रसूर्यादिप्रकाशकवस्तूनां शून्यत्वेन दिवारात्रिविभागरहितं नामरूपविशेषाभावदशायां सूक्ष्मस्थूलचेतनाचेतनसदसद्व्यक्तिव्यवस्थाभावतः सर्वमिदं तमसावृतमासीत्, तदा शिवतत्त्वमेवाद्वितीयं केवलं नामरूपविभागानर्हसूक्ष्मचिदचिदात्मकशक्तिविशिष्टं स्वयंप्रकाशत्वेन परिशिष्टमभूत्। तदेव शिवतत्त्वं तदानीम् अक्षरं नाशरहितं परं वस्तु तत्सवितुः आदित्यस्य पूर्वं प्रकाशप्रदत्वेन वरेण्यं अन्तर्वर्तिप्रकाशरूपं तदपि तदेव शिवतत्त्वम्, तस्मात् तादृशात् स्वविलीनस्वेतरसर्वप्रपञ्चाद् अद्वितीयात् पुराणी सनातनी नित्यशुद्धा तत्कालीनतमोपनोदिनी महास्फुरणरूपा विमर्शमयी प्रज्ञा नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिः प्रसृता प्रावर्तत इति।

अत्रेदं बोध्यम्—परशिवाविनाभावमापन्ना पराशक्तिर्घृतकाठिन्यन्यायेन स्वविभागानर्हपरशिवतत्त्वाद्विभागं प्राप्य ज्ञानक्रियाशक्तिसमरसीभूतेच्छाशक्तिपर्यायनामिका विमर्शाख्यप्रज्ञाशक्तिस्वरूपेण परिणताऽभूदिति। इयमेव विमर्शशक्तिरिच्छाशक्तिबहिरङ्गभूतक्रियांशानुप्रविष्टान्तरङ्गभूतज्ञानशक्तिसमरसीकृता सती बीजाङ्कुरन्यायेन भाविचराचरप्रपञ्चस्योपादानकारणतानिर्वाहकशक्तितत्त्वस्याद्योन्मेष इत्युच्यते।

---

१. श्वे. उ. ४।१८.

तत्र ज्ञानशक्त्यन्तरङ्गभूतक्रियाशक्तिबहिरङ्गानुप्रविष्टेच्छाशक्त्युद्रेकदशापन्नत्वे सति नित्यत्वं विमर्शशक्तेर्लक्षणम् । जीवस्येच्छाशक्तावतिव्याप्तिवारणाय नित्यत्वमिति । जीवेशयोरतिप्रसक्तिवारणाय सत्यन्तम् । सादाख्यादावतिप्रसङ्गवारणाय इच्छाशक्त्युद्रेकदशापन्नत्वविशेषणम् । केवलेश्वरेच्छाशक्तौ तद्वारणायानुप्रविष्टान्तम् ।

"सोऽकामयत बहु स्यां प्रजायेयेति"[1]

इति श्रुत्युक्तबहुप्रपञ्चभावनात्मकविमर्शशक्तिरूपेण पराशक्तेर्विकास इति मन्तव्यम् । एवंभूता विमर्शशक्तिः स्वेच्छाशक्त्यन्तरङ्गभूतज्ञानशक्त्युद्रेकानुप्रविष्टा सती जलाधिवासितचणकादिवत् किञ्चिद्वैलक्षण्येनाङ्कुरायमाणेदन्तारूपं विश्वस्फुरणरूपं सदाशिवतत्त्वमित्युच्यते । तदेव शक्तितत्त्वं क्रियाशक्त्युद्रेकदशां प्रविष्टं सत् कृतवस्तुवदङ्कुरितमिदन्तारूपं स्वाहन्तया आच्छाद्य वर्तमानविश्वस्फूर्तिमयमीश्वरतत्त्वमित्युच्यते । इदमेव नारायणापरपर्यायेश्वरतत्त्वम् । तदेव शक्तितत्त्वं क्रियाशक्तिप्रधानेदन्तायाः संविद्रूपाहन्तान्तर्गतत्वेन प्रकाशमानत्वाद्विभागनिबन्धनभेदघटितसागरतरङ्गन्यायेनाहन्तेदन्तयोरैक्यप्रतिपत्तिब्रह्मापरपर्यायशुद्धविद्यातत्त्वमित्युच्यते ।

तदेव शुद्धविद्यातत्त्वं मयूराण्डरसन्यायेन स्वान्तर्लीनेषु समधिगतभवनक्रियोन्मुखेषु भावेष्वन्योन्याभावनिबन्धनभेदबुद्धिप्राधान्यमवलम्ब्य मायातत्त्वात्मना परिणमते । पुरुषस्य महेश्वराद्विभक्तत्वेन मायापहृतैश्वर्यत्वादसङ्कुचिततत्कर्तृताशक्तिरेव किञ्चित्कर्तृतारूपं कलातत्त्वमित्युच्यते । ज्ञातृताशक्तिरेव किञ्चिदज्ञत्वलक्षणमविद्यातत्त्वमित्युच्यते । पूर्णताशक्तिरेवापूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्तिलक्षणं रागतत्त्वमुच्यते । नित्यता ह्यनित्यतां प्राप्य भूतभविष्यद्वर्तमानरूपं कालतत्त्वं भवति । व्यापकता ह्यव्यापकतां प्राप्य मयेदं कर्तव्यमिति नियमहेतुभूतनियतितत्त्वं भवति ।

काष्ठयोगेन वह्नेर्विस्फुलिङ्गाविर्भाववत् परमेश्वरेच्छाशक्तिवशाद् विभक्तः सन् मायाशक्तौ प्रविष्टो यः प्रकाशः स पुरुषतत्त्वं भवति । सृष्ट्यादिव्यापारौन्मुख्यगर्भिता सेयमिच्छाशक्तिरेव प्रतिस्फुरणगत्या स्वगत-

१. तैत्ति. उ. २।६.

ज्ञानक्रियान्योन्याभावलक्षणमायाप्रतिस्फुरणरूपं सुखदुःखमोहहेतुभूतानां सत्त्वरजस्तमसां साम्यावस्थारूपं बुद्ध्यहंकारादिपृथिवीतत्त्वपर्यन्तसर्व-तत्त्वानां मूलकारणं प्रकृतितत्त्वं भवति।

अध्यवसायत्वं बुद्धेर्लक्षणम्। अहं ममेदमित्यभिमानसाधनत्वमहङ्कारस्य लक्षणम्। सङ्कल्पविकल्पसाधनत्वं मनसो लक्षणम्। तदिदं बुद्ध्यहङ्कारमन-स्त्रितयं सुखदुःखाद्यान्तरपदार्थावधारणकरणरूपत्वाद् अन्तःकरणशब्दवाच्यं सद् इच्छाशक्तिप्रधानं भवति। पूर्वोक्तं प्रकृतितत्त्वं शरीरबाह्यलग्नं सत् पञ्चज्ञानेन्द्रियस्वरूपेण परिणमते। तत्र शब्दज्ञानसाधनत्वे सति इन्द्रियत्वं श्रोत्रस्य लक्षणम्। स्पर्शज्ञानसाधनत्वे सति इन्द्रियत्वं त्वचो लक्षणम्। रूप-ज्ञानसाधनत्वे सति इन्द्रियत्वं चक्षुषो लक्षणम्। रसज्ञानसाधनत्वे सति इन्द्रियत्वं रसनाया लक्षणम्। गन्धज्ञानसाधनत्वे सति इन्द्रियत्वं घ्राणस्य लक्षणम्। एतद्बाह्यकरणपञ्चकं ज्ञानशक्तिप्रधानत्वाद् ज्ञानेन्द्रियमित्युच्यते। तथा च बाह्यज्ञानासाधारणकारणत्वे सति इन्द्रियत्वं सामान्यतो ज्ञानेन्द्रि-यस्य लक्षणमिति फलितम्।

क्रियाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्याद् रजोगुणप्रधान-तया तदेव प्रकृतितत्त्वं पञ्चकर्मेन्द्रियरूपेण परिणमते। तत्र उच्चारण-क्रियासाधनत्वे सति इन्द्रियत्वं वचो लक्षणम्। दानादानादिक्रियासाधनत्वे सति इन्द्रियत्वं पाणेर्लक्षणम्। गमनागमनादिक्रियासाधनत्वे सति इन्द्रियत्वं पादस्य लक्षणम्। मलपरित्यागरूपक्रियासाधनत्वे सति इन्द्रियत्वं पायोर्लक्ष-णम्। रेतोमूत्रपरित्यागरूपक्रियासाधनत्वे सति इन्द्रियत्वमुपस्थस्य लक्षणम्। एतद् बाह्यकरणपञ्चकं क्रियाशक्तिप्रधानत्वात् कर्मेन्द्रियमित्यु-च्यते। तथा च बाह्यक्रियासाधारणकारणत्वे सति इन्द्रियत्वं कर्मेन्द्रियाणां सामान्यलक्षणम्। एतत् करणत्रयोदशकम् इच्छा-ज्ञान-क्रियाशक्त्यात्मक-मित्यवगन्तव्यम्।

अथ क्रियाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्याद् आत्मन-स्तमोगुणप्रधानत्वेन आकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी चोत्पद्यन्ते। तथा च "आत्मन[1] आकाशः सम्भूतः, आकाशा-द्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेः। एतान्येव

१. तैत्ति. उ, २।१.

पञ्चतन्मात्राणि सूक्ष्मभूतानीति व्यपदिश्यन्ते। एतेषु पञ्चतन्मात्रेषु शब्द-स्पर्श-रूप-रस-गन्धाख्यास्तत्तद्विशेषगुणा अनभिव्यक्तत्वेन प्रतिभासन्त इति तन्मात्रपदवाच्या भवन्ति। तथा चाऽनभिव्यक्तशब्दादिगुणाश्रयत्वं सामान्यतः पञ्चतन्मात्राणां लक्षणमिति फलितम्। स्थूलभूतेऽतिव्याप्तिवारणायानभिव्यक्तेति।

एवमनभिव्यक्तशब्दगुणमात्राश्रयत्वं शब्दतन्मात्रलक्षणम्। स्थूलाकाशे व्यभिचारवारणाय अनभिव्यक्तेति। स्पर्शतन्मात्रादावतिव्याप्तिवारणाय शब्देति। अनभिव्यक्तस्पर्शगुणमात्राश्रयत्वं स्पर्शतन्मात्रलक्षणम्। स्थूलवायौ व्यभिचारवारणाय अनभिव्यक्तेति। शब्दतन्मात्रादौ अतिप्रसङ्गवारणाय स्पर्शेति। अनभिव्यक्तरूपगुणमात्राश्रयत्वं रूपतन्मात्रलक्षणम्। स्थूलाग्नौ व्यभिचारवारणाय अनभिव्यक्तेति। स्पर्शतन्मात्रादावतिव्याप्तिवारणाय रूपेति। अनभिव्यक्तरसगुणमात्राश्रयत्वं रसतन्मात्रलक्षणम्। स्थूलसलिलेऽतिव्याप्तिवारणाय अनभिव्यक्तेति। स्पर्शतन्मात्रादावतिव्याप्तिवारणाय रसेति। अनभिव्यक्तगन्धगुणमात्राश्रयत्वं गन्धतन्मात्रलक्षणम्। स्थूलपृथिव्यामतिप्रसङ्गवारणाय अनभिव्यक्तेति। रूपतन्मात्रादावतिप्रसक्तिवारणाय गन्धेति।

एतेभ्यः पञ्चतन्मात्रेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि समुत्पद्यन्ते। सूक्ष्मशरीराणि तु भूतसूक्ष्मपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं वृत्तित्रयात्मकैकमन्तःकरणं पञ्चवृत्तिक एकः प्राणः। एतान्येव लिङ्गशरीराणीति व्यवह्रियन्ते।

अत्र ज्ञानेन्द्रियसहितं ज्ञानशक्तिप्रधानं बुद्धितत्त्वं कर्तृधर्मरूपविज्ञानमयकोशो भवति। ज्ञानेन्द्रियसहितमिच्छाशक्तिप्रधानं मनस्तत्त्वं करणरूपं मनोमयकोशो भवति। कर्मेन्द्रियसहितं क्रियाशक्तिप्रधानं प्राणतत्त्वं कार्यरूपप्राणमयकोशो भवति। एतत्कोशत्रयमिलितमेव सूक्ष्मशरीरमित्युच्यते।

एतत्सूक्ष्मशरीरावच्छिन्नो जीवस्तैजस इति व्यपदिश्यते। तैजसस्य सूक्ष्मशरीरमिदं स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वाद् जाग्रद्वासनामयत्वाच्च स्वप्नः। अत एव स्थूलप्रपञ्चलयस्थानं ज्ञानशक्तिप्रधानत्वेन ज्ञानशक्तिरत एव विज्ञानादिकोशत्रयात्मकमित्युच्यते। तथा च—"स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसः" इति श्रुतेः।

१. माण्डू. उ. ४.

स्थूलभूतानि त्रिवृत्कृतानि। त्रिवृत्करणं नाम तेजोबन्नानां मध्ये एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्वद्वितीयस्थूलभागं परित्यज्य अन्यदीयस्थूलभागयोरेकैकभागस्य संयोजनम्। तथाहि श्रूयते—"सोऽयं' देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतं एकैकां करवाणि" इति।

ननु त्रिवृत्करणे कृते तेजसः पृथिव्याद्यात्मकत्वे काठिन्यद्रवत्वादिविशिष्टतयोपलम्भप्रसङ्ग इति चेन्न, अर्धभूयस्त्वात् स्वस्वाश्रितगुणविशिष्टतोपलम्भात्। एवं शाखान्तरे प्रसिद्धाकाशवायुसृष्टेः श्रुतत्वात् तत्परित्यागाऽनुपपत्तेः। अतस्तच्छ्रुतिविरोधपरिहारायोपसंहारः क्रियते। न च वाय्वाकाशयोर्व्यवहार एव नास्तीति वाच्यम्, महान् वायुः, महन्नभ इति सर्वाऽनुभवसिद्धत्वात्।

यत्तु पञ्चीकरणसमष्टिः पञ्चभूतसृष्टिरिति, तन्न मनोरमम्, व्यवहारमार्गप्राप्तपञ्चीकृतिर्मुधा, पञ्चीकरणस्य कुत्राप्यश्रवणात्, श्रुतहानाश्रुतकल्पनाप्रसङ्गात्, त्रिवृत्करणश्रुतिविरोधाच्च। ननु श्रुत्यन्तरैकवाक्यतया पञ्चानां भूतानां सृष्टिं प्रक्रम्य तेषां सूक्ष्मतया व्यवहार्यमाणानां व्यवहारसिद्धये त्रिवृत्करणं ब्रुवन्ती श्रुतिः पञ्चीकरणाभिप्रायेति चेन्न, तथा सति त्रिवृत्करणेनैव सामञ्जस्ये व्यवहारमात्रसिद्धये श्रुतिविरुद्धपञ्चीकरणकल्पनानौचित्यात्।

एवं त्रिवृत्कृतेषु भूतेषु प्रतिनियताश्रया अपि शब्दादयो गुणा यथायथमुत्पद्यन्ते। एतदुक्तं भवति—आकाशादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वेन स्वस्वकार्यापेक्षया व्यापकत्वात् कार्यांशसंवलितत्वेऽपि न कार्यगतगुणाश्रयतयाऽभिव्यक्तिः, किन्तु स्वस्वगुणाश्रयतैव। तथा कार्याणां स्वकारणापेक्षयाऽल्पत्वात् तेषां कारणभागसम्मिश्रितानां कारणगुणाश्रयतयापि भवत्यभिव्यक्तिरिति।

तत्रान्येषां चतुर्णां भूतानां भौतिकानां च यावदपेक्षितावकाशप्रदत्वात् प्रथमभूतस्याकाशशब्दवाच्यत्वम्। तत्र शब्दैकगुणाश्रयत्वमाकाशस्य लक्ष-

---

१. छा. उ, ६।३।२-३.

णम्। वाय्वादावतिव्याप्तिनिरासाय शब्देकेति। आश्रयत्वं गुणनिष्ठ-विशेषणतानिरूपितविशेष्यतासम्बन्धेन।

एवं शब्दस्पर्शोभयगुणाश्रयत्वं वायोर्लक्षणम्। वह्न्यादावतिव्याप्ति-वारणाय उभयपदम्। आश्रयत्वं च पूर्ववत् सम्बन्ध-विशेषेण बोध्यम्। वायुस्तु कम्पन-भ्रमण-शोषण-वेगादिस्वभावविशेषात् कल्प्यते।

शब्द-स्पर्शरूपगुणत्रयाश्रयत्वं दाहकत्वं वा वह्नेर्लक्षणम्। सलिला-दावतिव्याप्तिवारणाय गुणत्रयेति। लघुलक्षणमाह—दाहकत्वमिति। तच्च दाहकशक्तिविशिष्टत्वमिति यावत्, वह्नौ दाहकशक्तेः सर्वानुभव-सिद्धत्वात्। दाहकत्व-पाचकत्व-रूपवत्त्वादिस्वभावविशेषादेव वह्नि-सिद्धेरवर्जनीयत्वाच्च। दाहकत्वधर्मस्य तेजोजातीयताप्रयोजकत्वस्य दीपे वह्नौ मरीचिमालिनि च दृष्टत्वात् चन्द्रादौ च सलिलमये शैत्य-गुणस्यैवोपलम्भेन दाहकत्वाभावेऽपि पाचकत्वस्यैव सर्वानुगतस्य तेजो-जातीयताप्रयोजकत्वाभ्युपगमाद् ओषधीशे चन्द्रमसि सर्वौषधिसंवर्धनस्य पाचकत्वेन सम्भवात् तस्य तेजोजातीयत्वोपपत्तेः।

शब्दस्पर्शरूपरसाख्यगुणचतुष्टयाश्रयत्वं स्नेहवत्त्वं वा सलिलस्य लक्षणम्। पृथिव्यादावतिव्याप्तिवारणाय गुणचतुष्टयेति। लघुलक्षणमाह—स्नेहवत्त्वं वेति। स्नेहो नाम रसविशेषः। न तु मतान्तरोक्त-गुणान्त-रत्वम्। सलिलं च द्रावकत्व-प्लावकत्वादि-स्वभावविशेषात् सिद्ध्यति, तेषामेव तद्धर्मत्वावगमात्।

शब्द-स्पर्श-रूप-रस-गन्धाख्यपञ्चगुणाश्रयत्वं पृथिव्या लक्षणम्। अननुगतपञ्चगुणाश्रयत्वे सलिलादावतिव्याप्तिरतो शब्दादीनामनुगतरीत्या ग्रहणम्। अनुगतत्वं च स्वरूपसम्बन्धविशेषः। न तु स्वसंयुक्तत्वादिरिति। सा च पृथिवी छेद्यत्व-पाच्यत्व-कठिनत्वादिस्वभावविशेषात् सिद्ध्यति।

एतत्पञ्चभूतसमष्टिरूपैव चतुर्दशलोकानां ब्रह्माण्डस्य तदन्तर्गत-स्थूलशरीराणां तदुचितान्नपानादीनामुत्पत्तिर्भवति। तस्मात् स्थूल-शरीरावच्छिन्नो जीवो विश्व इत्युच्यते। विश्वस्येदं स्थूलशरीरं स्थूल-भोगायतनत्वात् स्थूलशरीरं क्रियाशक्तिप्रधानत्वात् क्रियाशक्तिरत एव जाग्रद् अन्नविकारत्वाच्च अन्नमयकोश इति च व्यवह्रियते। तथा च—

"[1]जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः" इति श्रुतेः।

एवं कलादिभूम्यन्तस्थूलचिदचिद्रूप-शक्तिविशिष्टत्वाद् जीवस्यास्य सर्वज्ञत्व–सर्वकर्तृत्व-पूर्णत्व-नित्यत्व-व्यापकत्वरूपाः सूक्ष्मशक्तयः सङ्कुचिता भवन्ति। एवं रीत्या जीवस्यास्याऽप्रतिहतस्वातन्त्र्यरूपेच्छाशक्तिः सङ्कुचिता सती अपूर्णंमन्यतारूपमाणवमलमित्युच्यते। ज्ञानशक्तिः सङ्कुचिता सती सर्वज्ञत्वस्य किञ्चिज्ज्ञत्वस्याप्तेरन्तःकरणबुद्धीन्द्रिय-सम्बन्धवशाद् भेदवेद्यप्रथारूपं मायीयं मलमित्युच्यते। एवं क्रियाशक्तिः सङ्कुचिता सती सर्वकर्तृत्वस्य किञ्चित्कर्तृत्वाप्तेः कर्मेन्द्रियसम्बन्धवशात् शुभाऽशुभानुष्ठानमयं कार्ममलमित्युच्यते। अतो मलत्रयविशिष्टत्वादस्य जीवस्य संसारतापसहिष्णुत्वम्। तदपगमेन सच्चिदानन्दस्वरूपः शिव एव भवतीति, "अस्मि प्रकाशे नन्दामि" इत्याद्यनुभवसिद्धं सच्चिदानन्द-स्वरूपत्वं जीवस्यापि निर्विवादमिति तत्त्वम्।

इति श्रीपूवल्लीबृहन्मठीयचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनीलकण्ठ-शिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां षट्त्रिंशत्तत्त्वनिरूपणं नाम सप्तमं प्रकरणम्॥



१. माण्डू, उ. ३.

## अथ अष्टमं प्रकरणम्

प्रागुक्तप्रकरणे षट्त्रिंशत्तत्त्वानां विवेचनं कृतम्। इदानीं परशिवस्य सर्वप्रपञ्चशरीरकत्वेन सर्वान्तर्यामित्वं निरूप्यते।

सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवः "तत्[1] सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्या स्वस्मिन्नविनाभावमापन्नविमर्शशक्तिपरिजृम्भितशुद्धमायासहकृततत्त्वेन कलादिभूम्यन्तत्रिंशत्तत्त्वात्मना स्थूलचिदचिद्रूपशक्त्यात्मकप्रपञ्चाकारं सकलकार्यजातं सृष्ट्वा स्वयमात्मतया प्रविश्य—"[2]सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च" इति श्रुत्युक्तसर्वान्तर्यामित्वेन सर्वशरीरकतया विराजते।

सोऽयं सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवः स्थूलसूक्ष्मकारणात्मकनिखिलप्रपञ्चप्रकाशं सत् तुरीयमित्युच्यते, "[3]प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेः। अयमेव परशिवः "[4]द्वा सुपर्णा" इति श्रुत्युक्तजीवसाक्षीति प्रतिपाद्यते। तस्यैतस्य तुरीयचैतन्यस्य परशिवतत्त्वस्य सर्वकारणत्वहेतुना सर्वानुप्रवेशस्तावत् सिद्ध्यति, "[5]तत् सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। ततः सर्वनियन्तृत्वं सिद्ध्यति, "[6]अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेः। ततः सर्वशरीरत्वं सिद्ध्यति, "[7]यः पृथिव्यां तिष्ठन्" इत्याद्यन्तर्यामिब्राह्मणे नियम्यस्य पृथिव्यादेः सर्वस्यापि प्रपञ्चस्य नियन्तृशरीरत्वश्रवणात्। इदमेव जगज्जन्मादिकारणत्वहेतुना परम्परया सिद्ध्यति। सर्वशरीरत्वमिह सर्वात्मत्वं विवक्षितम्। इदं च "[8]सर्वं खल्विदं ब्रह्म" इति समानाधिकरणनिर्देशस्य तावदुपपादकं भवत्येव। "ब्राह्मणो विद्वान्", "ब्राह्मणो बृहस्पतिसवेन यजेत" इत्यादिलौकिकवैदिकव्यवहारेषु शरीरवाचिशब्दानां शरीरिपर्यन्तत्वदर्शनादिति भावः।

स्यादेतत्, शरीरवाचिनां शरीरिपर्यन्तत्वमसिद्धम्, तथानुशासना-

---

१. तैत्ति. उ. २।६ २. तैत्ति. उ. २।६. ३. ना. प्र. उ. ८।२०
४. मुण्ड. ३।१।१ ५. तैत्ति. उ. २।६ ६. तैआ. ३।११
७. बृ. उ. ३।७।३ ८. छा. उ. ३।१४।१

भावात्, लौकिकवैदिकव्यवहारयोः शरीरात्मभ्रमसिद्धार्थावलम्बनत्वोपपत्तेः। अस्ति च भ्रमसिद्धार्थावलम्बना हि वैदिकव्यवहारः—"उत्ताना वै देवगवा वहन्ति" इत्यादि। तथा च पर्यायेण सुरनरतिर्यगादिसर्वदेहेष्वात्मभ्रमवति जीव एव—"सर्वं खल्विदं ब्रह्म"[1] इत्ययं भ्रमसिद्धसार्वात्म्यनिर्देश उपपद्यते। न तु परब्रह्मणि सर्वशरीरकत्वमात्रवति तत्तादात्म्यभ्रमरहित इति चेत्, अत्रेदं बोध्यम्—यथा नीलपदं न केवलं स्वस्यैव वाचकम्, अपि तु स्वविशिष्टोत्पन्नस्यापि, तथा चराचरप्रपञ्चवाचकसर्वपदमपि न केवलं चराचरप्रपञ्चवाचकम्, अपि तु तद्विशिष्टशिवतत्त्वस्यापि।

तथाहि नीलादिशब्दास्तावद् गुणविशिष्टद्रव्यस्यापि वाचकाः, नीलमुत्पलमिति समानाधिकरणव्यवहारदर्शनात्। न च मतुब्लोपात् तन्निर्वाहः, मतुब्लोपानुशासनस्य हि मतुब्लोपेनैव द्रव्याभिधानमिति नाभिप्रायः, शब्दाभावस्य शब्दकार्यकारित्वाभावात्। नापि लुप्तेन स्मृतेन मतुपा तदभिधानमिति तदभिप्रायः। मतुब्लोपस्य सिद्धशब्दान्वाख्यानार्थं वैय्याकरणकल्पितत्वेन वस्तुतस्तत्र लुप्तस्य मतुपोऽभावात्। तस्मान्मतुब्लोपानुशासनेनापि नीलादिशब्दानां गुणविशिष्टद्रव्यवाचकत्वमेव न सिद्धयति, मतुबश्रवणे तल्लोपानुशासनबालात् तदर्थप्रत्ययावश्यंभावे च सति नीलादिशब्दानामिव तज्जनकत्वपर्यवसानात्।

किमर्थं तर्हि मतुब्लोपानुशासनम्? समानाधिकरणव्यवहारादेव हि नीलादिशब्दानां गुणविशिष्टद्रव्यवाचकत्वं सिद्धयति। उच्यते। सन्ति नीलादिशब्दाः केवलगुणवाचका अपि, "घटस्य नीलो गुणः" इत्यादिव्यधिकरणव्यवहाराणामपि दर्शनात्। तथा च यथा गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां निष्कृष्टगुणपरत्वविवक्षायां नैल्यं नीलत्वं नीलिमेति भावप्रत्ययः, तथा तेषां निष्कृष्टगुणवाचिनां द्रव्यपरत्वविवक्षायां मतुप्प्रत्ययोऽपि भवेत्। दृश्यते हि पुण्यपापादिशब्दानां "अयं पुरुषः पुण्यः" "अयं पापः", "अस्य पुण्यम्", "अस्य पापम्" इत्यादिद्विविधव्यवहाराद् धर्माधर्मादिमात्रवाचकत्वेन तद्धर्मिपर्यन्तत्वेन च द्विविधानां धर्माधर्ममात्रवाचकानां धर्मिपर्यन्तत्वविवक्षायां पुण्यवान् पापवान् इति मतुबन्तव्यवहारः। तथाऽत्रापि तत्प्राप्तौ तद्व्यावृत्त्यर्थं मतुब्लोपानुशासनम्। तेन द्रव्यपर्यन्ता एव नीलादिशब्दा द्रव्येषु प्रयोक्तव्याः, गुणमात्रपर्यवसायिनोऽप्यभेदोपचार-

---

१. छा. उ. ३।१४।१

विवक्षायां प्रयोक्तव्याः। यथा "साक्षान्नीलगुण एवेयं वनिता नीलिमैवेयम्" इति। कदापि गुणमात्रपर्यवसितानां द्रव्यपर्यन्तत्वविवक्षायां मतुबन्तप्रयोगो नास्तीति सिद्धयति। वार्त्तिककृतापि "'गुणवचनेभ्यो मतुपो लुक्" इत्यनुशासनानन्तरमिदमेव तस्य प्रयोजनमुक्तम्—"अव्यतिरेकात् सिद्धमिति चेत्, दृष्टो व्यतिरेकः" इति। अत्र अव्यतिरेकः अव्यभिचारः। ततश्च शुक्लादिशब्दैरभिधीयमानानां गुणानां गुणव्यभिचाराद् गुणिना सहैवाभिधानात् शुक्लादिशब्दशक्त्यैव गुण्यभिधाने सिद्धे मतुब्लोपानुशासनं व्यर्थमिति शङ्का। "वस्त्रः सशुक्लः" इति गुणाभिधानस्य गुणिव्यभिचारो दृष्टः। अतः केवलगुणाभिधायकशब्दस्य द्रव्यपर्यन्तत्वविवक्षायां ततो मतुपि प्राप्ते लुगनुशासनमिति व्यवहारः।

एतेन नीलादिशब्दा गुणमात्रवाचिन एव, अभेदोपचारावलम्बनं तु "नीलमुत्पलम्" इत्यादिसमानाधिकरणनिर्देशो "नीलिमैवेयम्" इति निर्देशवदित्यपि शङ्का निरस्ता। गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां भावे गुणवाचिनां नीलिमादिशब्दानामनिष्पत्तिप्रसङ्गात्। गुणवाचिभ्यो भावप्रत्ययोत्पत्तौ हि तेषां गुणगतधर्मवाचित्वमेव स्यात्, न तु गुणवाचित्वम्। एतेनैवाभेदभ्रमशक्तिभ्रमाभ्यां समानाधिकरणनिर्देशनिर्वाहोऽप्यपास्तः। न चायमभ्रान्तव्यवहारसाधारणो निर्वाहः। ननु तथापि गुणमात्रवाचकानां नीलादिशब्दानां तद्विशिष्टेषु द्रव्येषु लक्षणया समानाधिकरणव्यवहारः सम्भवति, तत्सम्भवे च न तेष्वपि शक्त्यन्तरं कल्पनीयम्, गौरवात्। एवं च लक्षणानियमार्थं मतुब्लोपानुशासनम्। लक्षणीयपरनीलादिशब्दाद् भावप्रत्ययेन नीलिमादिशब्दनिष्पत्तिरिति सर्वं सङ्गच्छते।

अनयैव दिशा शरीरवाचिनो देवमनुष्यब्राह्मणादिशब्दा अपि आत्मपर्यन्ताः। न च तथा सति शरीरादिशब्दानामपि आत्मपरता स्यादिति वाच्यम्, तत्प्रवृत्तिनिमित्तस्य शरीरत्वस्य साक्षात् स्वाऽपृथक्सिद्धाश्रय एव प्रवृत्तिनिमित्तत्वाद् देवमनुष्यादिशब्दानामिव तेषामात्मपर्यन्तप्रयोगाभावेनाऽतिप्रसङ्गवारणार्थं साक्षात्त्वविशेषणस्य आवश्यकत्वात्। तस्मान्नीलादिशब्दानां द्रव्यपर्यन्तत्वदर्शनात् तद्रीत्या प्रपञ्चशब्दानामपि ब्रह्मपर्यन्तत्वं युक्तम्, "नीलो घटः" इत्यादिवत् "सर्वो वै रुद्रः", "सर्वं खल्विदं ब्रह्म" इत्यादिप्रयोगदर्शनेन तेषां नीलादिशब्दसमानत्वात्।

अत्रेदमवगन्तव्यम्—येषां शब्दानां स्वप्रवृत्तिनिमित्ताश्रयमात्रे शक्तिः, तेषु नीलादिशब्दन्यायोपन्यासः। येषां शक्तौ तदाश्रये साक्षात्त्व-विशेषणमपेक्षितम्, तेषां ब्रह्मवाचकत्वं न नीलादिशब्दन्यायेन सिद्धयति, किन्तु "सर्वो वै रुद्रः", "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यम्, "[3]सोऽकामयत बहु स्यां प्रजायेय" इत्यादि बहुभवनसङ्कल्पः, "[4]नामरूपे व्याकरवाणि", "[5]तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादिनामरूपव्याकरण-मिति प्रमाणैः सिद्ध्यति।

अनेन सर्वप्रपञ्चस्य परशिवशरीरकत्वेन वश्यत्वरूपं नियम्यत्वं शरीर-लक्षणमिति सूचितम्। स्वामिनियम्यभृत्यादिस्वतिव्याप्तिवारणार्थं यो यद्व्यापनेन नियच्छति, तत्तस्य शरीरमिति तल्लक्षणं फलितम्। तेन स्वनियम्यप्रपञ्चव्यापकत्वं परशिवस्य शरीरलक्षणं प्रपञ्चितम्। अतः स्वामी भृत्यासंसृष्टस्तं नियच्छति। नाविको नावमारुह्य नियच्छन्नपि तदेकदेशे वर्तते। कृत्रिमव्याघ्रः पुमान् व्याघ्राकृतिदारुचर्मादियन्त्रमनु-प्रविश्य नियच्छन्नपि न तद्व्याप्याधितिष्ठति। हस्तपादादिकं विमुक्तावस्थापन्नं कदाचित् प्रेरणादिना अधितिष्ठन्नपि व्याप्यनाधि-तिष्ठतीति न तेष्वतिव्याप्तिः। परस्परसंयोगविशेषरूपावस्थाविशेषापन्नं तु हस्तपादादिकं शरीरमेवेति तस्य लक्ष्यत्वात् तत्र नातिव्याप्तिः। घ्राणेन्द्रिय-वर्गव्यापि लिङ्गशरीरान्तर्गतत्वेन लक्ष्यत्वात् तत्रापि नातिव्याप्तिः। संसारिणश्चिच्छक्तिव्याप्त्या स्वशरीरे नियम्यप्रदेशानधिष्ठायैव नियच्छन्ति। मुक्ताश्चिच्छक्तिव्याप्त्यैव विश्वमधिष्ठाय नियच्छन्तीति न क्वाप्यव्याप्तिः। इदं च जगज्जन्मादि ब्रह्मलक्षणवत् कादाचित्कमुपलक्षणतया लक्षणं न स्वरूपतया। अतः सुषुप्तशरीरस्य शरीरत्वापत्तिरिति दोषस्य नावकाशः। न चैवं सति मुक्तो यावदधिष्ठास्यति चैत्रस्तावत् तं प्रति संसारा-वस्थायामपि शरीरत्वापत्तिर्दोषः, इष्टापत्तेः। अत एव मनुष्यादिशरीर-मात्रविषयपरिच्छिन्नाहंभावस्य भ्रान्तिरूपत्वमुपपद्यते। इदमेव शरीर-लक्षणं सूचयितुं "[5]यः पृथिव्यां तिष्ठन्" इत्याद्यन्तर्यामिब्राह्मणे परमेश्वरस्य पृथिव्यादिषु बहिरन्तश्च व्याप्तिदर्शनपूर्वकं पृथिव्यादेस्तन्नियम्यत्वं युक्तम्।

तस्मात् श्रुतानुषक्तसर्वब्रह्मशब्दयोरैक्यार्थस्यापि न हानिः। प्रपञ्चवाचि-

---

१. महामना. उ. २२ अनुवाक. २. छा. उ. ३।१४।१. ३. तैत्ति. उ. २।६
४. बृ. उ. १।४।७ ५. बृ. उ. ३।७।३

शब्दप्रवृत्तिनिमित्तानां साक्षात्परम्परासाधारण्येन अपृथक्सिद्धस्वाश्रयमात्रे शब्दप्रवृत्तिनिमित्ततायाः समर्थितत्वेन सर्वशब्दः प्रपञ्चे ब्रह्मणि चाभिधेये प्रवृत्तिनिमित्तभेदाभावात् प्रपञ्चब्रह्मणोरुद्देशविधेयभावज्ञापकः। पदयोः प्रथमचरमभावस्तु वाक्यप्रमाणरूपत्वाद् ब्रह्मश्रुत्यनुग्रहाय बाध्यः। "सर्वं खल्विदं ब्रह्म" इत्युक्तार्थस्य हेतुसमर्पकस्येतिकरणस्य श्रुतित्वेऽपि ब्रह्मश्रुतिगर्भवाक्ये प्रवृत्तिमपेक्ष्य तदर्थस्येतिकरणेन हेतुत्वं वक्तव्यमिति प्रथमप्रवृत्तिब्रह्मश्रुत्यनुग्रहस्य ब्रह्मणः सर्वशरीरत्वे प्रतिपाद्यमाने तत्समान-संवित्संवेद्यं सर्वस्य ब्रह्मशरीरत्वं तेन हेतुत्वेनोच्यत इति समर्थनीयम्।

वस्तुतस्तु "यस्य चात्मा शरीरम्", "यस्य चाव्यक्तं शरीरम्" इत्याद्यन्तर्यामिब्राह्मणेन पृथिव्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य परशिवशरीरत्वबोधनात् शिवस्य सर्वशब्दाभिधेयत्वमव्याहतमिति वाच्यार्थविधयैव सकलशब्दानां परशिवे समन्वयो बोद्धव्यः।

इति श्रीपूवल्लीबृहन्मठचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वश्रीनीलकण्ठ-
शिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां परशिवस्य
सर्वशरीरकत्वनिरूपणं नाम अष्टमं प्रकरणम्॥



---

१. छा. उ. ३।१४।१

# अथ नवमं प्रकरणम्

प्रागुक्तप्रकरणेषु उद्देशलक्षणपरीक्षापुरःसरं पदार्थत्रयं निरूप्य तदुपजीवकत्वेन प्रत्यक्षादिप्रमाणत्रयं पुरस्कृत्य सत्कार्यवादोक्तकार्यकारणभावो विवक्षितः। ततस्तदनुगतरीत्या षट्त्रिंशत्तत्त्वानां विवेचनं कृत्वा परब्रह्मणः परशिवस्य चराचरप्रपञ्चात्मकसर्वान्तर्यामित्वेन सर्वशरीरकत्वमपि प्रपञ्चितम्। इदानीं तमेव क्रममनुसृत्य शिवाद्वैतसिद्धान्तस्वरूपं निरूप्यते।

शिवाद्वैतसिद्धान्तोऽयं द्वैताऽद्वैतबोधकसर्वश्रुतिसमन्वयसम्पादितः। वेदागमोपनिषत्पुराणादिप्रमाणपुरःसरं युगयुगान्तरेषु श्रीजगद्गुरुरेणुकादिपञ्चाचार्यैः प्रतिष्ठापितः।

सकलनिगमागमप्रसिद्धस्यास्य सिद्धान्तस्य शिवाद्वैत–शक्तिविशिष्टाद्वैत–विशेषाद्वैत–षट्स्थल-लिङ्गाङ्गसामरस्य–शिवयोगाद्यभिधेयत्वं महापाशुपतपर्यायत्वमप्यस्ति। तथा शिवागमेषु सर्वनामसमन्वितोऽयं वीरशैव शब्देन व्यवह्रियते। सत्यप्यभिधानभेदे सर्वे तदाश्रिताशयाः खलेकपोतन्यायेन शिवजीवैक्यबोध एव समापतन्ति। वीरशैवशब्दोत्पत्तिमागमा एवमामनन्ति—

वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिनी।
तस्यां रमन्ते ये शैवाः वीरशैवाः प्रकीर्तिताः॥[1] इति।

शिवाद्वैतमित्यत्र शिवेऽद्वैतमिति व्युत्पत्तिः। मलत्रयसम्बन्धेन शरीरत्रयावच्छिन्नं सत् काष्ठसंयोगावस्थायां वह्नेरनन्तविस्फुलिङ्गाविर्भाववत् तदीयेच्छाशक्तिवशाद् विभक्तमिदं स्वस्वरूपगोपनावशेन अनन्तजीवभावमापन्नं यत्परशिवचैतन्यं तत् स्वशक्तिविकाशवशाद् मलत्रयापगमेन शरीत्रयाऽनवच्छिन्नं सत् स्वस्वरूपाविर्भावप्रभावेण "यथा[2] नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" (मुण्ड० उ० ३।२।८) इत्यादिश्रुतिशतप्रमाणसमासादितं स्वस्वरूपानन्दरसनिर्भरं स्वयमेव भवतीति। तथा चोक्तम्।

[3]चैतन्यमात्मनो रूपं सच्चिदानन्दलक्षणम्।
तस्यानावृतरूपत्वात् शिवत्वं केन वार्यते॥ इति।

१. सि. शि. ५।१६, पृष्ठ ५७. २. मुण्ड. उ. ३।२।८.
३. शि. द., पृष्ठ ३६.

अत्र वीरशैवशिवाद्वैतपदयोः समानार्थकत्वं स्पष्टमेव ।

शक्तिविशिष्टाद्वैतमित्यत्र पूर्ववत् पदार्थप्रतिपत्तिरवधेया । तथाहि—शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ शक्तिविशिष्टौ शिवजीवौ, तयोरद्वैतं शक्तिविशिष्टाद्वैतमिति ।

विशेषाद्वैतमित्यत्र—विश्च शेषश्च विशेषौ शिवजीवौ, तयोरद्वैतं विशेषाद्वैतमिति । अत्र 'वि'शब्देन सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिव उच्यते । शेषशब्देन शरीरङ्गः अर्थात् स्थूलचिदचिद्रूपशक्तिविशिष्टो जीव उच्यते । तयोरद्वैतमेकत्वमस्तीति वाक्यार्थबोधः । अमुमेवार्थमभिप्रेत्य ब्रह्मसूत्रभाष्ये श्रीश्रीपतिपण्डितभगवत्पादैर्बहुधा प्रपञ्चितम् । तत्र षट्स्थलाष्टावरणादिक्रमोऽपि शक्तिविशिष्टाद्वैतप्रक्रियामनुसृत्य स्पष्टतया प्रतिपादितः । स च तत्कृतश्रीकरभाष्ये द्रष्टव्यः ।

षट्स्थललिङ्गाङ्गसामरस्यसिद्धान्तक्रमोऽपि पूर्ववत् शिवाद्वैतप्रक्रियानुसारेणावगन्तव्यः । तत्र अङ्गषट्स्थलानामुपासकरूपाणां लिङ्गषट्स्थलानामुपास्यरूपाणां च पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थलक्रममनुसृत्य दहरविद्योपासनाक्रमेण स्थूलशक्तिविशिष्टजीवस्याङ्गस्थलवाच्यस्य सूक्ष्मशक्तिविशिष्टशिवस्य लिङ्गस्थलवाच्यस्य चैक्यरूपसामरस्यमेव सिद्धान्तरहस्यम् ।

शिवयोग इत्यत्रापि शिवे योगो जीवस्य, अविनाभावसम्बन्ध इति । अथवा शिवस्य योगः शिवयोगः । श्रीगुरुकरुणयाऽङ्गत्रये लिङ्गत्रयरूपपरशिवस्य योगः संयोजनम्, तेन नैरन्तर्येण जीवः शिवोऽहमिति चिन्तनया शिव एव भवतीत्ययमपि क्रमः शिवाद्वैतप्रक्रियानुसारेणैव शिवयोगिभिः समासाद्यते । तथा चोक्तम्—

यथा भ्रमरयोगेन कीटोऽपि भ्रमरायते ।
मानवः शिवयोगेन शिवः संजायते तथा ॥ इति ।[1]

सिद्धान्तेऽस्मिन् भेदाऽभेदद्वयमप्यङ्गीक्रियते । न चैवमात्यन्तिको भेदो नाप्यात्यन्तिकाभेदश्च । किन्तु सर्वश्रुतिसमन्वयबलेन भेदाऽभेदद्वयस्य पारमार्थिकत्वमङ्गीक्रियते । तस्माद् भेदश्रुतिमात्रबोधकद्वैतसिद्धान्ताद्

१. शि० द०, पृष्ठ ४४; टिप्पणी ।

अभेदश्रुतिमात्रबोधकाद्वैतसिद्धान्ताच्च भेदाऽभेदबोधकः सर्वश्रुतिसमन्वय-संनुपपादितः शिवाद्वैतसिद्धान्त एव विशिष्यत इति शिवाद्वैतदर्पणे शिवानुभवशिवाचार्यचरणैः स्पष्टतया प्रतिपादितः। तथाहि—जीवब्रह्मणो-रभेदाङ्गीकारे—"द्वा[1] सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकसीति॥", "द्वे[2] ब्रह्मणी हि मन्तव्ये" इति भेदप्रतिपादकवाक्यविरोधेन, भेदाङ्गीकारे "एक[3]मेवा-द्वितीयम्" "नेह[4] नानास्ति किञ्चन", "एको[5] हि रुद्रो न द्वितोयाय तस्थे" इत्यभेदविधायकवाक्यविरोधेन च उभयोरप्रामाण्यप्रसक्त्या शक्ति-विशिष्टाद्वैतपक्ष एवाङ्गीकरणीयः। एतत्पक्षे तु सूक्ष्मस्थूलप्रपञ्चाकार-शक्तिविशिष्टयोरभेदमादायाद्वैतवाक्यानां विशेषणविशेष्यभेदमादाय द्वैत-वाक्यानामपि प्रामाण्यसिद्धया विरोधाभावादिति।

अत्रायमाशयः—अभेदबोधे प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदो-ऽपितन्त्रम्। यथा "नीलो घटः" इत्यत्र नीलत्वघटत्वयोर्भेदस्य "नीलाऽभिन्नो घटः" इत्यभेदबोधे कारणत्वमिष्यते, तथा "[6]तत्त्वमसि", "जीवस्तु परमः शिवः" इति वैदिकलौकिकवाक्यजनितपरोक्षबोधे "अहं[7] ब्रह्मास्मि", "ॐ शिवोऽहम्" इति वैदिकलौकिकवाक्यजनितापरोक्षबोधे च प्रकारता-वच्छेदकविशेष्यतावच्छेदकयोर्भेदस्य कारणत्वमिष्यते। एतच्च भेदाऽभेदयोः पारमार्थिकत्वे सङ्गच्छते। अन्यथा—"ब्रह्म[8] सत्यं जगन्मिथ्या जोवो ब्रह्मैव नापरः" इति मायावादिस्वीकृते जीवमिथ्यात्वपक्षे जगन्मिथ्यात्व-पक्षे च समानप्रत्यासत्त्या प्रकारतावच्छेदकविशेष्यतावच्छेदकयो-र्भेदाभावात् कथमभेदबोधः सङ्गच्छते। यथा "घटो घटः" इत्यादौ प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावादभेदबोधस्य प्रतिकूलत्वम्, तथैव मायावादेऽपि "जीवो ब्रह्मैव" इत्यत्र अवधारणोक्तजीवमिथ्या-त्वाङ्गीकारे सति जीवे ब्रह्मत्वबोधात् "ब्रह्म ब्रह्मैव" इति वाक्यार्थावगमे-नात्रापि प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावाद् जीवब्रह्मणोरभेद-बोधस्य प्रतिकूलत्वमनिवार्यम्। तस्मात्—"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" इत्यादिश्रुतिशतप्रबोधितं नाम-

---

१. मुण्ड. उ. ३।१।१ २. त्रि. ता. ५।१७ ३. छा. उ. ६।२।१
४. बृ. उ. ४।४।१९. ५. श्वे. उ. ३।२ ६. छा. उ. ६।८।७
७. बृ. उ. १।४।१० ८. ब्र. ज्ञा. माला. श्लोक २०

रूपोपपन्नदशायां सूक्ष्मस्थूलशक्तिरूपप्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदं तात्त्विकमङ्गीकृत्य स्वशक्तिविकासवशेन नामरूपविनिर्मुक्तदशायां जीवानां परशिवे सामरस्यं प्रतिपादयितुं शिवाद्वैत एव सुगमः पन्थाः ।

न च शरीरत्रयावच्छिन्नजीवस्य तदनवच्छिन्नपरशिवेन सहाभेदबोधाऽसम्भवेन तयोरात्यन्तिकभेदस्य दुर्वारत्वमिति वाच्यम्, यथा घटपटाद्युपाध्यवच्छिन्नस्याकाशस्य उपाधिभेदेन भेदोपपादनेऽपि तदनवच्छिन्नेन महाकाशेन सहाभेदबोध उपपद्यते, तथा तत्तच्छरीरावच्छिन्नस्य जीवचैतन्यस्य तत्तच्छरीरभेदेन भेदोपपादनेऽपि तदनवच्छिन्नेन परशिवचैतन्येन सहाभेदबोध उपपद्यते । तथा चोक्तम्--

महाघटप्रभेदेन यथाकाशः प्रतीयते ।
प्रतीयते तथा चैकं स्थलं लिङ्गाङ्गभेदतः ।। इति ।

लिङ्गाङ्गसामरस्यरहस्ये आगमा इदमामनन्ति । तथाहि--स्थलशब्दवाच्यं परब्रह्म स्वशक्तिक्षोभवशाद् लिङ्गस्थलम्, अङ्गस्थलमिति द्विविधं भवति । तत्र लिङ्गस्थलस्य भावप्राणेष्टभेदात् त्रिविधत्वम्, अङ्गस्थलस्यापि योग-भोग-त्यागभेदात् त्रिविधत्वमुपेत्य अङ्गरूपो जीव उपासनाबलाद् लिङ्गस्वरूपमुपैतीत्येतत्सर्वमग्रिमप्रकरणे प्रतिपादयिष्यते ।

इति श्रीपूवल्लीबृहन्मठचरपट्टाध्यक्षेण तर्कतीर्थोपाह्वेन श्रीनीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां शिवाद्वैतनिरूपणं नाम नवमं प्रकरणम् ।।

१°

# अथ दशमं प्रकरणम्

पूर्वोक्तप्रकरणेषु शिवाद्वैतसिद्धान्तोक्तास्त्रिपदार्थाः, तद्भेदाश्च सप्रमाणं व्यवस्थापिताः। इदानीं तत्पदार्थानामैक्यप्रतिपत्तिविधया लिङ्गाङ्गसामरस्यरहस्यं निरूप्यते।

तत्र शिव-जीव-शक्तिरूपपदार्थत्रयमेव महापाशुपतमतोक्तपति-पशु-पाश इति पर्यायेणोच्यते। एवं पतित्वमापन्नः परशिवः प्रेरयितेति, पशुत्वमापन्नो जीवो भोक्तेति. पाशत्वमापन्ना जडशक्तिरेव भोज्यमिति व्यवह्रियते। अतः शिव-जीव-शक्तय इति वा, पति-पशु-पाशा इति वा, प्रेरयितृ-भोक्तृ-भोज्यानीति वा पदार्थत्रयं प्रतिपादयन्ति शिवाद्वैतिनः। अनेन शिवाद्वैतं महापाशुपतं वीरशैवमिति परस्परं भेदं मन्यमानानां मतमपास्तम्, अभिधानभेदेऽपि तत्प्रतिपाद्यपदार्थानां भेदाभावात्। तथा चोक्तं सिद्धान्तशिखामणौ श्रीरेणुकभगवत्पादैः—

'गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।
तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा॥[1] इति।

अत्र स्थलशब्दवाच्ये घनलिङ्गाभिधे सच्चिदानन्दरूपे परब्रह्मणि तन्निष्ठविमर्शशक्तिवैषम्यात् प्रेरयितृ-भोक्तृ-भोज्यानीति त्रिप्रकारतयोच्यन्त इति तदर्थः। तथाहि—शुद्धोपाधिरूपसूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवः सर्वाधिपतित्वेन सर्वज्ञः प्रेरयितेत्युच्यते, "ईशानः[2] सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्" इति श्रुतेः। तथा मिश्रोपाधिरूपस्थूलचिदचिद्रूपशक्तिविशिष्टा-जीवाः पशुत्वेन वह्नेर्विस्फुलिङ्गादिवत् शिवांशानुभूताः किञ्चिज्ज्ञा भोक्तार इत्युच्यन्ते। "यथा[3] सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥" इति श्रुतेः, "अंशो[4] नानाव्यपदेशात्" इति सूत्राच्च। एवं शुद्धतामसरूपमत्यन्तगूढचैतन्यं जडमव्यक्तं पाशत्वेन भोज्यमित्युच्यते। तत्र ऊर्ध्व-

---

१. सि. शि. ५।३९ पृष्ठ ६५
२. महाना. उ. १९ अनुवाक
३. मुण्ड. उ. २।१।१
४. ब्र. सू. २।३।४३

मायारूपसूक्ष्मशक्तिविशिष्टत्वात् परशिवः सर्वज्ञत्वादिधर्मयुक्तो नित्यमुक्त इत्युच्यते।

[1]'सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः
षडाहुरङ्गानि महेश्वरस्य॥

इति श्रुतेः (स्मृतेः)।

तथा अधोमायारूपस्थूलशक्तिविशिष्टत्वाज्जीवात्मानः किञ्चित्कर्तृत्वादिधर्मयुक्ता बद्धा इत्युच्यन्ते,

[2]किञ्चित्कर्ता च किञ्चज्ज्ञो बद्धोऽनादिशरीरवान्।
अविद्यामोहिता जीवाः ब्रह्मैक्यज्ञानवर्जिताः॥
परिभ्रमन्ति संसारे निजकर्मानुसारतः।

इति सिद्धान्तशिखामण्युक्तेः।

एवमनादिमलत्रयाश्रयत्वेन संसारदाहदन्दह्यमानो जीवोऽनेकजन्मार्जितसुकृतजन्यस्वकर्मपरिपाकवशाद् विनष्टमलवासनत्वेन शुद्धान्तःकरणो यदा जायते, तदाऽस्य किञ्चिज्ज्ञत्व-किञ्चित्कर्तृत्वादिशक्तयो भक्तिरूपेण परिणमन्ते। तथो चोक्तं शिवगीतायाम्—"को[3]टिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते" इति। एवमयं शिवभक्तिसम्पन्नो जीवः पिण्ड इत्युच्यते। तथा च सिद्धान्तशिखामणौ—

[4]शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः।
जायते शिवकारुण्यात् प्रस्फुटाः भक्तिरैश्वरी॥
जन्तुरन्त्यशरीरोऽसौ पिण्डशब्दाभिधेयकः॥ इति।

एवंक्रमेण पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थलानुसारेण कर्मज्ञानात्मकाष्टावरणपञ्चाचाररूपपतिधर्मपरायणाः सन्तो लिङ्गाङ्गसामरस्यसुखमनुभवन्ति शिवयोगिनः।

---

१. वा. पु. १२।३३ २. सि. शि. ५।४७-४७; पृष्ठ ७०-७१
३. शि. गी. १।१६ ४. सि. शि. ५।५३-५४; पृष्ठ ७२

लिङ्गाङ्गसामरस्यरहस्यप्रकारस्तु वर्ण्यते। तथाहि—स्थलशब्दवाच्यं सच्चिदानन्दलक्षणं जगद्विलक्षणं यद् घनलिङ्गं तत् स्वशक्तिक्षोभवशात् स्ववाचकोद्गीत-भेदनिबन्धनेन द्विप्रकारं भवति, वाच्यवाचकभेदात्। तत्र वाच्यं घनलिङ्गम्, वाचकं ॐकारप्रणवरूपम्, "तस्य[1] वाचकः प्रणवः" इति पातञ्जलसूत्रोक्तप्रामाण्याद्वाच्यवाचकयोरभेदपर्यवसानात्। तत्र वाच्यं घनलिङ्गस्थलशब्दाभिधेयं लिङ्गस्थलमङ्गस्थलमिति द्विविधं भवति। सच्चिदानन्दस्वरूपं स्वप्रकाशमुपास्यं लिङ्गस्थलमित्युच्यते। तत्र शिवकारुण्यप्रभावेण शिवभक्तिसम्पन्नो जीवोऽङ्गपदवाच्यो भवति। अङ्गपदस्य रूढिशक्त्या शरीरवाचित्वेऽपि "यस्य चात्मा शरीरम्, यस्य चाव्यक्तं शरीरम्" इत्यन्तर्यामिब्राह्मणेन पृथिव्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य परशिवशरीरत्वबोधनाज्जीवस्याप्यङ्गपदवाच्यत्वे न काप्यनुपपत्तिः। एवं लिङ्गपदस्य रूढिशक्त्या परमेश्वरवाचकत्वे सत्यपि "लीयते गम्यते यत्र तल्लिङ्गं, ब्रह्म शाश्वतम्" इत्यागमोक्तप्रकारेण जगज्जन्मादिकारणं वस्तुलिङ्गशब्देनाभिधीयते। योगशक्त्या प्रागुक्तपारिभाषिकलक्षणया च लिङ्गमेव परब्रह्मेति वेदागमोपनिषत्पुराणादिप्रमाणैः सिद्धं भवति। एतल्लिङ्गरूपस्य परशिवस्य शक्तिपातवशेन अङ्गपदवाच्यो जीवः शिवभक्तिप्रभावेण तल्लिङ्गजिज्ञासुः स्रक्चन्दनवनितादिविषयसुखस्य ज्योतिष्टोमादिजन्यस्वर्गादिसुखस्य च नश्वरत्वं मन्यमानो जननमरणादिदुःखकलुषिते संसारेऽसारतामनुभवन् संसारानुरागं परित्यजति। एवं पिण्डतापिण्डविज्ञानसंसारहेयस्थलसम्पन्नो जीवः संसारनाशकं घनलिङ्गपर्यायाभिधेयप्रतिपादकं शिवसिद्धान्ततत्त्वज्ञं शिष्यसंदेहविच्छेदकं सर्वतन्त्रस्वतन्त्रमाचार्यकुलसमुत्पन्नमष्टावरणविशिष्टज्ञानप्रदातारं लिङ्गाङ्गसामरस्यरहस्यबोधकं श्रोत्रियं ब्रह्मनिष्ठं श्रीगुरुमनुसरति, "परीक्ष्य[2] लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥" इति श्रुतेः

अथ सोऽयं करुणासागरः श्रीगुरुः स्वसन्निधिं समागतं सर्वसल्लक्षणलक्षितं स्वशिष्यं परमकृपया शिवज्ञानसंबन्धप्रदायिन्यां संसारपाशविच्छेदिन्यां शिवदीक्षायां नियोजयन् आदौ कुण्डमण्डपपञ्चकलशादिस्थापनपूर्वकशिवकलाविन्यासरूपक्रियादीक्षया त्यागाङ्गापरनामकस्थूलाङ्गावच्छिन्ने जीवे इष्टलिङ्गं योजयित्वा, जीवात्मनि षडध्वन्यासपूर्वकशिव-

१. यो. सू. १।२७ २. मुण्ड. उ. १।२।१२

लिङ्गमूर्ति प्रतिष्ठाप्य, पञ्चाक्षरीमहामन्त्रोपदेशरूपमन्त्रदीक्षया भोगाङ्गापरनामकसूक्ष्माङ्गावच्छिन्ने जीवे प्राणलिङ्गं संयोज्य, हस्तमस्तकसंयोगरूपवेधदीक्षया शिष्यस्य योगाङ्गापरनामककारणाङ्गावच्छिन्ने जीवे भावलिङ्गं संयोज्य तल्लिङ्गे शिष्यप्राणान् समादाय, तदिष्टलिङ्गं शिष्यहस्ते निधाय, सकलश्रुत्यागमपुराणादिप्रसिद्धाष्टावरणविशिष्टतया घनलिङ्गैकरूपमोक्षसाधननिरुत्तरैकोत्तरशतस्थलगर्भीकृतषट्स्थलप्रतिपादकसिद्धान्त - शास्त्रप्रतिपाद्यां शिवाद्वैतविद्यामुपदिशति,

[1]तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ इति।

अत्र लिङ्गाङ्गसामरस्यविद्यैव ब्रह्मविद्येति व्यपदिश्यते। तथाहि-- सच्चिदानन्दस्वरूपं परब्रह्माभिधं शिवतत्त्वात्मकं घनलिङ्गमेव सर्वतत्त्वानां स्थानभूतत्वाल्लयभूतत्वाच्च स्थलमिति व्यपदिश्यते। तथा चोक्तमागमेषु--

घनलिङ्गं महाभासं सच्चिदानन्दलक्षणम्।
निष्कलं निष्क्रियं शान्तं स्वतन्त्रं स्वप्रकाशितम् ॥
[2]सर्वेषां स्थानभूतत्वाल्लयभूतत्वतस्तथा।
तत्त्वानां महदादीनां स्थलमित्यभिधीयते ॥ इति।

अत्रेदं बोध्यम्—ॐकारप्रणववाच्यं घनलिङ्गं स्वशक्तिक्षोभवशेन लिङ्गस्थलम्, अङ्गस्थलमिति द्विप्रकारं भवति। तत्र लिङ्गस्थलमानन्दकलाविशिष्टं सद् भावलिङ्गम्, चित्कलाविशिष्टं सत् प्राणलिङ्गम्, सत्ताकलाविशिष्टं सद् इष्टलिङ्गमिति त्रिविधं भवति। पुनरेतल्लिङ्गत्रयं स्वगतोपाधिभेदेन प्रत्येकं द्विविधं भवति। तत्र भावलिङ्गं शान्त्यतीतोत्तरकलाविशिष्टं महालिङ्गम्, शान्त्यतीतकलाविशिष्टं प्रसादलिङ्गमिति द्विविधं भवति। प्राणलिङ्गं च शान्तिकलाविशिष्टं जङ्गमलिङ्गम्, विद्याकलाविशिष्टं शिवलिङ्गमिति द्विविधं भवति। इष्टलिङ्गं तु प्रतिष्ठाकलाविशिष्टं गुरुलिङ्गम्, निवृत्तिकलाविशिष्टमाचारलिङ्गमिति द्विविधं भवति। एतेषां षड्विधानां लिङ्गानाम् आज्ञाचक्राद्याधारचक्रपर्यन्तषड्विधचक्राण्येव स्थानभूतानीति।

एवं जीवापराभिधमङ्गस्थलमपि स्वभवत्युपाधिभेदेन विशुद्धभक्तिविशिष्टं योगाङ्गम्, विचारभक्तिविशिष्टं भोगाङ्गम्, विधेयभक्तिविशिष्टं

१. मुण्ड. उ. १।२।१३ २. अनु. सू. २।३

त्याङ्गाङ्गमिति त्रिविधं भवति। पुनरेतदङ्गत्रयं स्वगतभक्त्युपाधिभेदेन प्रत्येकं द्विविधं भवति। तत्र योगाङ्गं समरसभक्तिविशिष्टमैक्यस्थलम्, आनन्दभक्तिविशिष्टं शरणस्थलमिति द्विविधं भवति। भोगाङ्गं च अनुभवभक्तिविशिष्टं प्राणलिङ्गस्थलम्, अवधानभक्तिविशिष्टं प्रसादिस्थलमिति द्विविधं भवति। त्यागाङ्गं नैष्ठिकभक्तिविशिष्टं माहेश्वरस्थलम्, श्रद्धाभक्तिविशिष्टं भक्तस्थलमिति द्विविधं भवति।

अत्रानुग्राहकत्वाल्लिङ्गस्थलमुपास्यम्, अनुग्राह्यत्वादङ्गस्थलमुपासकं भवति। उपासनायाद्वैतभावनिवृत्तिहेतुत्वेनोपास्योपासकभावापन्नयोर्लिङ्गाङ्गयोर्भ्रमरकीटन्यायेनाभेद एव स्थास्यति। तथा चोक्तम्—

यथा भ्रमरयोगेन कीटोऽपि भ्रमरायते।
मानवः शिवयोगेन शिवः संजायते तथा ।। इति।

अत्रेदमवगन्तव्यम् — पिण्डादिज्ञानशून्यान्तेषु एकोत्तरशतस्थलेषु चतुश्चत्वारिंशत्संख्याकानाङ्गस्थलानां सप्तपञ्चाशत्संख्याकानां लिङ्गस्थलानां चोपासकोपास्यभेदं विदित्वा भक्ताद्यैक्यान्तेष्वङ्गस्थलेषूपास्यत्वेनानुसन्धीयमानानां गुर्वादिज्ञानशून्यान्तस्थलानां भक्त्यादितत्तदङ्गस्थलसमाश्रितत्वेनानुष्ठीयमानत्वाद् यथायथं भक्तादितत्तदङ्गस्थलेषु तदाश्रितलिङ्गस्थलानि योजयित्वा शिवाद्वैतविद्यां समभ्यसेदित्येव सम्प्रदायः।

केचित्तु प्रथममङ्गस्थलानुष्ठानानन्तरं लिङ्गस्थलसमाश्रयणाद् भक्ताद्यैक्यस्थलसम्पन्नो जीवो गुर्वादिज्ञानशून्यान्तलिङ्गस्थलानामधिकारी भवति। पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थले उपासकस्योपास्यत्वसंभवेन वीरशैवमते तरतमभावो न विद्यते, सिद्धान्तशिखामणावपि तथैवोक्तत्वादिति वदन्ति। तेषां शिवाद्वैतसिद्धान्तविज्ञानलेशोऽपि न स्पृशति। तथाहि— भक्ताद्यैक्यस्थलसमाश्रितेषु उपास्यरूपेषु गुर्वादिज्ञानशून्यान्तेषु लिङ्गस्थलेषु तत्तदङ्गस्थलसमाश्रितत्वेनोपास्यवस्तुविधानाद् यावज्जीवमङ्गस्थलस्थित एव जीवो गुर्वादिज्ञानशून्यान्तलिङ्गस्थलानि उपासीतेति उपासकोपास्यभेदेन तरतमभावस्यावर्जनीयत्वात्। सिद्धान्तशिखामणौ अङ्गस्थलं लिङ्गस्थलमिति विभागं कृत्वा मुमुक्षूणां सुबोधार्थं प्रथमं पिण्डादिसहभाजनान्तचतुश्चत्वारिंशत्स्थलानां विवेचनं कृत्वा तदनन्तरं पूर्वोक्तभक्तादिस्थलाश्रितानां लिङ्गस्थलानां विवेचनं कृतमिति तद्गतप्रमाणैरेवागम्यते। यथा दीक्षागुरुस्थलावसरे—

'गुर्वादिज्ञानशून्यान्ता भक्तादिस्थलसंश्रिताः ।
स्थलभेदाः प्रकीर्त्यन्ते पञ्चाशत् सप्त चाधुना ॥
आदौ नवस्थलानीह भक्तस्थलसमाश्रयात् ।
कथ्यन्ते गुणसारेण नामान्येषां पृथक् शृणु ॥ इति ।

एवं माहेश्वरादिस्थलाश्रितानां तदुपास्यरूपाणां लिङ्गस्थलानामपि विवेचनं कृतमिति अङ्गलिङ्गस्थलयोरुपासकोपास्यत्वे क्षत्यभावेन यावज्जीवमुपासको भूत्वैव लिङ्गस्थलमुपासीतेति ।

तत्र "मुक्तिमूलं गुरोः कृपा" इत्यागमोक्त्यनुसारेण लिङ्गस्थलादिभूतश्रीगुरुकारुण्यसंप्राप्तदीक्षात्रयेणास्य जीवस्य मलत्रयप्रध्वंसद्वारा शरीरत्रयस्थापि तल्लिङ्गत्रयसंबन्धात् सर्वाङ्गलिङ्गमयत्वेन सर्वशरीरेषु सर्वेन्द्रियेषु च सर्वं लिङ्गमयमेव भवतीति ज्ञानशून्यपर्यन्तं श्रीगुरुलिङ्गजङ्गमेषु तनुमनोधनार्पणधिया तत्पादोदकप्रसादग्रहणसम्पादितशिवज्ञानप्रसादप्रभावेण विभूतिरुद्राक्षधारणादिना विशुद्धकायः सन् हृत्पुण्डरीके ज्योतिर्लिङ्गं ध्यायन् शिवपञ्चाक्षरीमहामन्त्रजपानुषक्तो भूत्वा ध्यानयोगसम्प्राप्तजीवन्मुक्तो भवेदिति ।

न च शरीरावच्छिन्नस्य जीवस्य शरीरानवच्छिन्नलिङ्गमयत्वं कथमुपपद्यत इति वाच्यम्, यथा सर्वान्तर्यामित्वेन शरीरावच्छिन्नमपि लिङ्गं तदनवच्छिन्नं भवति; तथा अवस्थासंबन्धेन शरीरावच्छिन्नयोरुभयोर्लिङ्गाङ्गयोर्भक्त्यानन्दरसैक्येन सामरस्याज्जीवस्य लिङ्गमयत्वे क्षत्यभावान्न वयं शक्तिभक्त्योर्भिन्नत्वं पश्यामः । आनन्दरसभक्तिरसयोर्निरतिशयप्रेमरूपत्वेन तदद्वयस्य पारमार्थिकत्वात् तद्विशिष्टत्वेन लिङ्गाङ्गयोः सामरस्यं निसर्गसिद्धमेव । न वयं भक्त्यानन्दयोर्भिन्नत्वं पश्यामः, जीवनिष्ठा भक्तिरेव ब्रह्मानन्दशक्तिस्वरूपेण विकासमापन्नेत्यनन्यत्वस्य स्वरूपतः सत्त्वात् । अतो ब्रह्मनिष्ठशक्तितो जीवनिष्ठा भक्तिरेव गरीयसीत्यागमा अप्यामनन्ति । तथाहि—

'शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि सा सदा ।
शक्तिभक्त्योर्न भेदोऽस्ति परमार्थनिरूपणे ॥

१. सि. शि. १५।३-४, पृष्ठ ४६-४८ २. अनु. सू. २।२६-२८

शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता।
शक्त्या प्रपञ्चसृष्टिः स्यात् भक्त्या तद्विलयो मतः ॥
समाया शक्तिराख्याता निर्माया भक्तिरीरिता।
अपि[1] तर्कप्रमाणाभ्यां शक्तेर्भक्तिर्गुणाधिका ॥
उपास्यत्वं भवेच्छक्त्या भक्त्योपासकता भवेत्।
तस्माल्लिङ्गस्थले शक्तिः भक्तिरङ्गस्थले स्थिता ॥
लिङ्गस्थलं शिवः साक्षाज्जीवात्माङ्गस्थलं भवेत्।
लिङ्गाङ्गस्थलयोरैक्यं शिवजीवैक्यमेव हि ॥इति।

यद्यप्यत्र शरीरे महालिङ्गादिषड्विधलिङ्गानां स्थानानि आज्ञाचक्रादिषड्विधचक्राण्येव, तत्तच्चक्रेष्वेव तेषां प्रत्यक्षयोग्यत्वात्, तथापि तत्तच्चक्रस्थितानां लिङ्गानां तत्तदिन्द्रियमुखेन तत्तत्पदार्थानुसन्धातृरूपत्वात् तत्तदिन्द्रियाणां लिङ्मुखत्वमुच्यते। तदुक्तं शिवागमेषु—

[2]आचारलिङ्गं घ्राणाख्यं भक्तस्थलसमाश्रयम्।
निवृत्तिकलयोपेतं गन्धग्रहणसाधनम् ॥
गुरुलिङ्गं तु जिह्वाख्यं माहेशस्थलसंश्रयम।
प्रतिष्ठाकलयोपेतं रसग्रहणसाधनम् ॥
शिवलिङ्गं तु नेत्राख्यं प्रसादिस्थलसंश्रयम्।
विद्याकलासमोपेतं रूपग्रहणसाधनम् ॥
त्वगाख्यं चरलिङ्गं तु प्राणिलिङ्गस्थलाश्रयम्।
शान्त्याख्यकलयोपेतं स्पर्शग्रहणसाधनम् ॥
प्रसादलिङ्गं श्रोत्राख्यं शरणस्थलसंश्रयम्।
शान्त्यातीतकलोपेतं शब्दग्रहणसाधनम् ॥
मानसं तु महालिङ्गमैक्यस्थलसमाश्रयम्।
शान्त्यतीतोत्तरोपेतं सर्वग्रहणसाधनम् ॥
एवं कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गस्य योजनम्।
ज्ञातव्यं योगिभिः सर्वं तत्तल्लिङ्गानुभावतः ॥इति।

---

१. अनु. सू. २।१।३३ २. शि. द. पुष्ठ ४६; क्रिया. सा. भाग ३, पुष्ठ ११३

अयमेव क्रमः केनोपनिषदि स्पष्टीकृतः। तथाहि—[1]"केनेषितं पतति प्रेषितं मनः" इत्युपक्रम्य—[2]"श्रोत्रस्य श्रोत्रं मनसो मनः" इत्यादिना इन्द्रियाणां तल्लिङ्गमुखत्वमुपवर्ण्य [3]"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥" इत्यादिना तत्तत्पदार्थानुसन्धातृरूपोपास्यवस्तुविधानेनोपदर्शितः। शिवागमेषु च—

[4]घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते।
जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत्॥
चक्षुषश्च तथा चक्षुः शिवलिङ्गमुखं भवेत्।
त्वचस्त्वक् चररूपस्य लिङ्गस्य मुखमुच्यते॥
मुखं प्रसादलिङ्गस्य श्रोत्रं श्रोत्रस्य कथ्यते।
हृदयं हृदयस्यैव महालिङ्गमुखं भवेत्॥
एवं लिङ्गमुखं ज्ञेयं तत्तदङ्गे प्रतिष्ठितम्॥इति।

"घ्राणस्य घ्राणं" इत्यत्र घ्राणस्य घ्राणपदोपलक्षितस्य आधारचक्रस्थिताचारलिङ्गस्य घ्राणं घ्राणेन्द्रियं मुखमुच्यत इत्यर्थो ग्राह्यः। एवं सर्वत्रायमेवार्थः समीचीनः। न कुत्रापि सर्वाङ्गलिङ्गमयत्वस्य व्याघातः। तस्मादिन्द्रियाणां लिङ्गमुखत्वप्रतिपादनाद् गन्धादिषड्विधपदार्थसमर्पणं तत्तदिन्द्रियमुखेन तत्तल्लिङ्गेभ्यः कुर्यात्। तथा च श्रूयते—"रुद्रेणात्तमश्नन्ति रुद्रेण पीतं पिबन्ति। रुद्रेणाघ्रातं जिघ्रन्ति तस्मात् प्रशान्तमनसो ब्राह्मणा निर्माल्यमेव भक्षयन्ति॥" इति।

एवं स्थूलसूक्ष्मकारणशरीरावच्छिन्नो जीवः स्वगुरुणा दीक्षात्रयेण शरीरत्रये योजितलिङ्गत्रयान्तर्भूतषड्विधलिङ्गेभ्यस्तत्तत्पदार्थार्पणानुसन्धानद्वारा स्वभक्तिसमरसीकृतं घनलिङ्गैक्यरूपमहानन्दमनुभवति। भक्त्यानन्दयोः प्रेमातिशयत्वेन नीरक्षीरसमरसीभाववत् तदेकरसानुभवेन जीवन्मुक्तो भवतीति तत्त्वम्।

तथाहि—भक्तस्तावदाचारलिङ्गस्य क्रियाशक्तियुक्तस्य श्रद्धाभक्त्या सुचित्तहस्तेन गन्धपदार्थं धृत्वा नकारमन्त्रमनुस्मरन् घ्राणेन्द्रियमुखे समर्प्य

---

१. केन. उ. १।१ २ केन. उ. १।२
३. केन उ. १।४ ४. शि. द. पृष्ठ ४७।४८

तत्प्रसादभोगी भूत्वा आनन्दी भवति। माहेश्वरो हि गुरुलिङ्गस्य ज्ञानशक्तियुक्तस्य नैष्ठिकभक्त्या सुबुद्धिहस्तेन रसपदार्थं धृत्वा मकारमन्त्रमनुस्मरन् रसनेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दीभवति। प्रसादी तु शिवलिङ्गस्येच्छाशक्तियुक्तस्य सावधानभक्त्या निरहङ्कारहस्तेन रूपपदार्थं धृत्वा शिकारमन्त्रमनुस्मरन् नेत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दीभवति। प्राणलिङ्गी तु आदिशक्तियुक्तस्य जङ्गमलिङ्गस्य अनुभवभक्त्या सुमनोहस्तेन स्पर्शपदार्थं धृत्वा वाकारमन्त्रमनुस्मरन् त्वगिन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दीभवति। शरणस्तु पराशक्तियुक्तस्य प्रसादलिङ्गस्य आनन्दभक्त्या सुज्ञानहस्तेन शब्दपदार्थं धृत्वा यकारमन्त्रमनुस्मरन् श्रोत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दीभवति। ऐक्यस्तु चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दीभवति। एवं समर्पितवतो जीवस्य लिङ्गभोगोपभोगित्वेन ज्ञप्ते ब्रह्मणि विश्रमितत्वात् तच्छरीरस्यापि मन्त्रलिङ्गरूपत्वं सिद्धम्। अतो यावच्छरीराधिवासस्तावत्क्रियाज्ञानसमुच्चयेनोपासनाविधानात् शरीरवियोगपर्यन्तं लिङ्गाङ्गसामरस्याचरणमव्याहतमेवेति मन्तव्यम्।

सर्वमिदमुपासनं इष्टलिङ्गनिक्षिप्तनिमेषोन्मेषवर्जितदृष्टिद्वारा प्राणलिङ्गानुलक्षितशाम्भवीमुद्रया शिवपञ्चाक्षरीमहामन्त्रजपक्रमानुसाधिताद् हृदयपुण्डरीकान्तर्वर्तिज्योतिर्लिङ्गानुसन्धानात् पश्चिमचक्रविराजमानभावलिङ्गसमरसानन्दानुभवरूपवतोऽनुसन्धानरूपान्तर्लिङ्गध्यानयोगबलेनैवोपासनं विधीयते। तथा चोक्तम्—

[1]हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्॥इति।

एवं हृदयपुण्डरीकान्तर्वर्तिज्योतिर्लिङ्गानुसन्धानवतः शिवयोगिनः स्वस्वरूपसाक्षात्कारवशाद् अणिमाद्यष्टसिद्धिसम्पत्तिः समुद्भवति। तत्रानुरागं परित्यजन् निरन्तरज्योतिर्लिङ्गानुसन्धानात् त्रिलोचनत्वनीलकण्ठत्वउमासहायत्वविरूपाक्षत्वादिमङ्गलस्वरूपं स्वानन्दानुभवं शिवतत्त्वं साक्षा-

१. कैव. उ. ६

त्करोति। ततस्तमसः परस्तात् निष्कलसच्चिदानन्दस्वरूपघनलिङ्गैक्य-लोलायमानोऽयं शिखिकर्पूरन्यायवत् परब्रह्मस्वरूपो भवतीति। तथा चोक्तम्—

[१]उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्। इति।

सोऽयं क्रमो भक्ताद्यैक्यपर्यन्तमाचारलिङ्गादिषड्विधलिङ्गोपासनाक्रमेण समासाद्यते। एवं समासादितानुसन्धानाद् भक्तस्थलमाश्रित्य पृथिव्यादि-सर्वतत्त्वानां प्रतिलोमपरिणामरीत्या उत्तरोत्तरस्थले समरसीकृत्य अन्ततो घनलिङ्गैक्यसुखमनुभवतीति। तथाहि—पृथिव्या भक्ताङ्गत्वात् सा तत्रैव लीना भवति, चिद्धृतिरूपत्वात्। अपां माहेश्वराङ्गत्वात् तास्तत्रैव लीना भवन्ति, चिदाप्यायनरूपत्वात्। तेजसः प्रसाद्यङ्गत्वात् तत् तत्रैव लीनं भवति, चिदुज्ज्वलनरूपत्वात्। वायोः प्राणलिङ्ग्यङ्गत्वात् स तत्रैव लीनो भवति, स्वतन्त्रतालक्षणस्पन्दनरूपत्वात्। व्योम्नः शरणाङ्गत्वात् तत् तत्रैव लीनं भवति, चिदानन्दरूपत्वात्।

एवं रीत्या भक्तस्याचारलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति। माहेश्वरस्य गुरुलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति। प्रसादिनः शिवलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति। प्राणलिङ्गिनो जङ्गमलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति। शरणस्य प्रसादलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति। ऐक्यस्य महालिङ्गाङ्गत्वात् स तत्रैव लीनो भवति।

एवमाचारलिङ्गं गुरुलिङ्गे लीनं भवति। गुरुलिङ्गं शिवलिङ्गे लीनं भवति। शिवलिङ्गं जङ्गमलिङ्गे लीनं भवति। जङ्गमलिङ्गं प्रसादलिङ्गे लीनं भवति। प्रसादलिङ्गं महालिङ्गे लीनं भवति। महालिङ्गं घनलिङ्गैक्य-लोलीभूतं भवति। अनयैव रीत्या पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थलानां

१. कैव. उ. ७.

तत्त्वमनुसन्धेयम् । तच्च सिद्धान्तशिखामण्यादौ शिवयोगिशिवाचार्यादिभिः प्रपञ्चितमित्यत्रैव विरम्यते ।

इति श्रीपूवल्लीबृहन्मठचरपट्टाध्यक्षेण, तर्कतीर्थवेदान्तविशा-
रदसांख्यालङ्कारन्यायवाचस्पतीत्यादिपदवीविभूषितेन,
श्रीनीलकण्ठशिवाचार्येण विरचितायां शिवाद्वैतपरिभाषायां
लिङ्गाङ्गसामरस्यरहस्यनिरूपणं नाम दशमं प्रकरणम् ।

समाप्तेयं शिवाद्वैतपरिभाषा ॥

॥ सर्वं शिवार्पणमस्तु ॥



# परिशिष्टम्–१

## सन्दर्भग्रन्थसंकेतसूची

| | | |
|---|---|---|
| अनु. सू. | = | अनुभवसूत्रम् |
| कठो. | = | कठोपनिषत् |
| केनो, केन. उ. | = | केनोपनिषत् |
| कैवल्यो, कैव. उ. | = | कैवल्योपनिषत् |
| क्रिया. सा. | = | क्रियासारः |
| छा. उ. | = | छान्दोग्योपनिषत् |
| तै. आ. | = | तैत्तिरीयारण्यकम् |
| तैत्ति. उ. | = | तैत्तिरीयोपनिषत् |
| त्रि. ता. | = | त्रिपुरातापिन्युपनिषत् |
| ना. प्र. उ. | = | नारदपरिव्राजकोपनिषत् |
| बृ. उ. | = | बृहदारण्यकोपनिषत् |
| ब्र. ज्ञा. माला | = | ब्रह्मज्ञानावलीमाला |
| ब्र. सू. | = | ब्रह्मसूत्रम् |
| भ. गी. | = | श्रीमद्भगवद्गीता |
| महाना. | = | महानारायणोपनिषत् |
| माण्डू. उ. | = | माण्डूक्योपनिषत् |
| मुण्ड. उ. | = | मुण्डकोपनिषत् |
| यो. सू. | = | योगसूत्रम् |
| वनदु. उ. | = | वनदुर्गोपनिषत् |
| वा. पु. | = | वायुपुराणम् |
| शि. गी. | = | शिवगीता |
| शिव. द. | = | शिवाद्वैतदर्पणम् |
| श्रीरुद्र. | = | श्रीरुद्राध्यायः |
| श्वे. उ. | = | श्वेताश्वतरोपनिषत् |
| सां. का. | = | सांख्यकारिका |
| सि. शि. | = | सिद्धान्तशिखामणिः |

## परिशिष्टम्–२

( शिवाद्वैतपरिभाषाकारेण स्वयमुल्लिखितानां ग्रन्थानां व्यक्तीनां मात्र संग्रहः कृतः )

### ग्रन्थोद्धृतग्रन्थग्रन्थकाराणां नामानि

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| सि० शि० २०/३२ | सि० शि० २०/४ पृ० २०२ | २ | ३० |
| व्यवहारा | व्यवहार | ९ | १७ |
| व्याप्स्यवानिति | व्याप्यवानिति | १२ | २१ |
| निगमागमाम्नाश्रुयतीति | निगमागमाम्नायश्रुतीति | १६ | २७ |
| परित्याज्याविरुद्ध | परित्यज्याविरुद्ध | १७ | २६ |
| सोम्यकेन | सोम्यैकेन | २४ | २० |
| प्रतिपत्तिब्रह्मा | प्रतिपत्तिर्ब्रह्मा | २७ | १५ |
| भावष्वन्यो | भावेष्वन्यो | २७ | १७ |
| सोऽयं | सेऽयं | ३० | ४ |
| विशिष्टतोप | विशिष्टतयोप | ३० | ८ |
| स्हो | स्नेहो | ३१ | १७ |
| पृथिव्यदेः | पृथिव्यादेः | ३३ | १८ |
| व्यवहारेष | व्यवहारेषु | ३३ | २२ |
| लम्बना | लम्बनो | ३४ | २ |
| त्पन्नस्यापि | त्पलस्यापि | ३४ | ७ |
| निदेंश | निर्देश | ३५ | १६ |
| भृत्यादिस्वति | भृत्यादिष्वति | ३६ | ९ |
| मवेति | मेवेति | ३६ | १७ |
| ससारिण | संसारिण | ३६ | १९ |
| प्रवृत्ति | प्रवृत्त | ३७ | ७ |
| नुग्रहस्य | नुग्रहाय | ३७ | ७ |
| सर्वनाम | एतत्सर्वनाम | ३८ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| प्रस्फुटाः | प्रस्फुटा | ४३ | २१ |
| कमज्ञाना | कमंज्ञाना | ४३ | २३ |
| घनलिङ्ग | घनलिङ्गं | ४४ | ६ |
| वाक्यत्वे | वाच्यत्वे | ४४ | ११ |
| रेवाग | रेवावग | ४६ | २९ |
| सम्बन्धेन शरीरा-वच्छिन्न | सम्बन्धेन शरीरावच्छिन्नमप्यङ्गं तदनवच्छिन्नं भवति। एवं शरीरानवच्छिन्न | ४७ | १८ |

[illegible]

## विशिष्टा वीरशैवग्रन्थाः

| | |
|---|---|
| लिङ्गधारणचन्द्रिका (म. म. प. शिवकुमारमिश्रकृतटीकासहिता) | १०.०० |
| महानारायणोपनिषत् ( वृषभदेवकृतशैवभाष्योपेता ) | ५.०० |
| मुण्डकोपनिषत् ( शाङ्करीव्याख्यासहिता ) | ५.०० |
| ईशावास्योपनिषत् ( शाङ्करीव्याख्यासहिता ) | २.०० |
| श्वेताश्वतरोपनिषद्वीरशैवभाष्यम्, डॉ. टी. जी. सिद्धप्पाराध्यकृतम् | ६.०० |
| कैवल्योपनिषत् ( सदाशिवभाष्योपेता ) | ५.०० |
| ब्रह्मसूत्रशाङ्करीवृत्तिः | ५.०० |
| श्रीमद्भगवद्गीतावीरशैवभाष्यम्, डॉ. टी. जी. सिद्धप्पाराध्यकृतम् | १०.०० |
| केनोपनिषत् ( शाङ्करीव्याख्यासहिता ) | यन्त्रस्था |
| सिद्धान्तशिखोपनिषत् ( शाङ्करीव्याख्यासहिता ) | यन्त्रस्था |
| शिवाद्वैतमञ्जरी | यन्त्रस्था |
| सिद्धान्तशिखामणिः, मरितोण्टदार्यकृततत्त्वप्रकाशिकासहितः | यन्त्रस्थः |
| सिद्धान्तशिखामणिः, ( मूलमात्रम् ) | ३.०० |
| श्रीजगद्गुरुरेणुकगीता ( सिद्धान्तशिखामणिसारसङ्ग्रहः ) आङ्ग्लव्याख्यासहिता | ४.०० |
| सिद्धान्तशिखामणिसमयसमीक्षा, ले. डॉ. चन्द्रशेखरशर्मा ( शिवाचार्यः ) हिरेमठः | २.५० |
| वीरशैवदर्शनेतिहासदिग्दर्शनम्; ले. डॉ. चन्द्रशेखरशर्मा ( शिवाचार्यः ) हिरेमठः | २.०० |

ग्रन्थप्राप्तिसंकेतः—

**प्रबन्धक, जंगमवाडीमठ**

**वाराणसी-२२१००१**